# क्वणति किञ्जल्कः; ध्वनति वज्रः




महाकवि-माया प्रसाद त्रिपाठी

राष्ट्रपतिसमानितेभ्यो विश्वविख्यातेभ्यो
विद्वद्वरेण्येभ्यो योगतन्त्रागमादीनाम्
अप्रतिमनिष्णातेभ्यः श्रीयुतव्रजवल्लभ
-द्विवेदिमहाभागेभ्यः समर्प्यते
क्वणति किञ्जल्कः, ध्वनति वज्रः"
इत्याख्यं संभूय महाकाव्यमिदं बहुमानपुरस्सरम्।

मायाप्रसादत्रिपाठी।

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
१६४

# करोति किञ्जल्कः, ध्वनति वज्रः

[ अभिनवायामदिशाशिल्पसम्भूतः ]

( सम्भूयमहाकाव्यम् )

प्रणेता
महाकविमायाप्रसादत्रिपाठी



चौखम्बा सुरभारती प्रकाशन
वाराणसी

प्रकाशक

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ५७२१४





प्रथम संस्करण १९९०

मूल्य ५०–००

अन्य प्राप्ति-स्थान

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१



*

प्रमुख वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक

**श्रीजी मुद्रणालय**

वाराणसी

THE

CHAUKHAMBA SURBHARATI GRANTHAMALA

164



# KVAṆATI KIÑJALKAḤ, DHVAṆATI VAJRAḤ

( Reverberations of new Directions, Dimensions and Technique )

( Sambhuya-Mahakavyam )

*By*

**Mahakavi Maya Prasad Tripathi**



CHAUKHAMBA SURBHARATI PRAKASHAN

VARANASI

CHAUKHAMBA SURBHARATI PRAKASHAN
*(Oriental Publishers & Distributors)*
K. 37/117, Gopal Mandir Lane
Post Box No. 1129
VARANASI 221001
*Telephone : 57214*



First Edition
1990

*Also can be had of*
CHAUKHAMBA SANSKRIT PRATISHTHAN
38 U. A. Bungalow Road, Jawaharnagar
Post Box No. 2113
DELHI 110007
*Telephone : 236391*

*

*Sole Distributors*
CHOWKHAMBA VIDYABHAWAN
CHOWK (Behind The Benares State Bank Building)
Post Box No. 1069
VARANASI 221001
*Telephone : 63076*

# क्वणति किञ्जल्कः, ध्वनति वज्रः

[ अभिनवायामदिशाशिल्पान्वेषणोन्मेषः ]

( संभूयमहाकाव्यम् )

प्रणेता

महाकवि-मायाप्रसादत्रिपाठी

## महाकवि-मायाप्रसादत्रिपाठिविरचिता
## विशिष्टाः संस्कृतकाव्यग्रन्थाः

१. क्वणति किञ्जल्कः, ध्वनति वज्रः
२. अक्षरतृषा
३. मित्र ! शब्दशिविरे
४. अन्या सरणिः
५. तस्मादृते
६. शतसेतुकृते
७. पथति च शाश्वतगीतम्
८. अवतिष्ठस्व क्षणं कान्तार अरे !
९. श्वः प्रभृति
१०. सर्वेषाम्

### मायाप्रसाद त्रिपाठी द्वारा प्रणीत अन्य प्रमुख ग्रन्थ

११. औचित्यजीवनम् ( मौलिक दर्शन की सर्वश्रेष्ठ कृति के रूप में सरकार द्वारा पुरस्कृत )।
१२. अतीत का अभिनवालोक ( प्राचीन भारतीय विज्ञान एवं संस्कृति )।
१३. कथाशेष ( प्राचीन भारतीय विज्ञान के बिलकुल नये पहलू )
१४. आविष्कारों का आवाहन ( सैकड़ों-सहस्रों बाद विज्ञान )।
१५. विज्ञान के नये सत्य, नये वादे ( वर्तमान विज्ञान, उसके अगले डग )।
१६. साढ़े सात फुट की तीन औरतें ( भविष्यनिर्मात्री विज्ञानकथाएँ )।
१७. आकाश की जोड़ी ( अनूठी मनोहर विज्ञानकथाएँ )।
१८. षोडशी ( सनसनीखेज, रोचक, उदात्त सामाजिक कहानियाँ )।
१९. प्यार और पनाह ( जीवन की अद्भुत पर्तों में अंकुरित पल्लवित मुग्धकर कहानियाँ )।
२०. तृप्ति ( रहस्य-रोमाञ्च के जीवन-दर्शन और सत्य से अपूर्व समन्वय करने वाला उपन्यास )।
२१. आत्महत्या का अमृत ( सत्य और रहस्य, धरती और आसमान, सात समुद्रपानी तथा मन की रेत आदि विरोधाभासों का अनुपम उपन्यास )।
२२. जापान की रूपरेखा।
२३. युगपथ से चीन।
24. Development of Geographic Knowledge in Ancient India ( Form Vedic times to 1200 A. D. ).
25. Stabilisation of World Peace ( Acclaimed by President D. D. Eisenhower. U. S. A. ).
२६-३७. लगभग एक दर्जन बाल-साहित्य ( शिशुगीत एवं बालकथाएँ )।

---

## न हि परितोऽसंलक्ष्य

संस्कृतसाहित्ये काव्ये च प्रत्नेपु क्षितिजेपु, परिवेशेपु, परिसरेपु, आयामेपु तथा अन्यूनमपितु पर्याप्तमात्रं पुष्कलं वाद्भुतमपूर्वं खलु सार्वकालिकं सार्वभौमं ननु। अनेनैव अद्यत्वेऽपि तद्विबुधवाणीवाङ्मयं काव्यं च विश्वस्य सर्वासां भाषाणां साहित्यसन्दोहे सर्वाग्रगण्यपङ्क्तौ प्रतिष्ठिते वै। परन्तु तदवलम्ब्य परितोपः—तैलिकवलीवर्दस्य वर्तुलपिष्टपेपणपथे—पर्यावरणे परिक्रमणं कस्यचिदपि सम्मतौ—अभिमते कदाप्यभीप्सितं न स्यात्, यतस्तु तद्गतिराहित्यं हि निष्क्रियता, निश्चेष्टता—जडता, अन्ततोगत्वा च तेन उपरतेः पर्यायत्वमुपेतुं शक्यते। अस्यापि कार्यकारणं स्पष्टमेव परिलक्ष्यते—भूतं, वर्तमानं, भविष्यच्च, एतेपां त्रयी सर्वदैव भूतस्य सौरभं, पोपणमाधारं च समाश्रित्य जीवितुं नोत्सहते—न शक्नोति—येन केन प्रकारेण सुखावहां प्रशंसार्हां प्राणयात्रामपि सम्पादयितुं न सक्षमा।

कणानां क्षणानां च रङ्गाः—स्वरवर्णाः परिवर्तन्ते। एकानन्तरमेकं—शताब्दानां वेशोभूपा, केशविन्यासः—विविधप्रसाधनं ( फैशनं ) एव नहि परिवर्तन्ते, तेपां शरीरसंरचना—वपुर्विन्यासः—विग्रहस्वरूपाण्यपि परिवर्तनमावर्तविवर्तान् समासादयन्ति। एतानि तानि उच्चावचत्वानि शवलत्वादीन्यपेक्षन्तेऽपि।

अत एव संस्कृतसाहित्यस्य विविधविधानां कवितानाटककथोपन्यासैकाङ्किप्रभृतीनां गतिराहित्यं, गतिस्थैर्यं श्लथत्वमेव वा उच्छेद्यानि—समाप्यानि। इदं तु नितरामपेक्षितम्। तत्राभिनवगतिं त्वरणं वा समाहर्तुमविकलचेष्टाया भावना सर्वथा सम्प्रति समीचीना मन्तव्या, सा जनता-जनमानसैः, सुधीभिः प्रवुद्धसमीक्षकैरपि नहि, प्रत्युत नितरां रूढसिद्धान्तसन्धैर्नीरक्षीरविवेकिभिरपि सौन्दर्यसंवेदनास्थानम्—इति परिभावनार्हा—स्वागतार्हा। एषा खलु सर्वेभ्यः प्रेरणां, प्रोत्साहनं प्रणोदनं चापेक्षते। कारयित्री-भावयित्रीप्रतिभासंवलितानां त्विदं करणीयमेव पवित्रं साहित्यसङ्ग्राहकमनुष्ठानं किल।

सम्प्रति विश्वस्य आङ्ग्ल-फ्रेञ्च-जर्मन-रशन-स्पैनिश-पोर्चुगीजेटैलियन-प्रभृतीनां सर्वासां समुन्नतोपचयशीलानां भाषाणां, किं वहुना ग्रीक( यवन )भाषायाः प्राचीनपरम्पराक्षुण्णाया अपि साहित्यस्रष्टारः कृतिनः साहित्यदेवाः स्वाय स्वाय साहित्याय नूतनशाश्वततायामं—नूतनामरदिशां प्रदातुं परमसाफल्यमादधाना अजस्रं प्रयतमाना दरीदृश्यन्ते। ग्रीकभाषायाः परमाभिव्यक्ति-परा-परमरमणीयायां परमश्लाघनीयायामवाधपरम्परायां 'जार्जसफरीडीज' 'ओडीसियस-इलीटस'

इत्येतौ नोवेलपुरस्कारविजेतारौ विश्वविश्रुतौ अधुनापि अमरस्तम्भौ इव अमृतकौमुदीविकिरौ तिष्ठतः । विंशतितमे शताव्दे अस्मिन् क्षेत्रे किञ्चित्सारवद् वास्तवं महत्त्वपूर्णं समुपलब्धमपि ।

प्रस्तुतकवेर्हृदये मस्तिष्के च परिभावनमाध्यमद्वये व्यष्टिसमष्टिराष्ट्राणां विश्वस्य, समग्रमानवतायाश्च एतादृशाः समस्याः, जागरूकता, उन्मेषः, प्रतिबद्धतापूर्वाग्रहकुण्ठाहीनसंवेदना, विपुलप्रसरा समवेदना, नानायथार्थानुभूतयः, आन्दोलनोद्वेलनालोडनविलोडनकरणानि, अनुभूतसत्यानि, उदात्तावदातशाश्वतसार्वभौममानवीयलक्ष्याणि, सप्तरङ्गिण्यः इन्द्रसप्तवर्णस्मितात्मिका जीवनदायिन्यः भीमोल्वणकल्पनाकादम्बिन्यः, प्रभञ्जनः, ज्वालामुख्यः, भूकम्पानामुद्गारोपप्लवाः, विस्फूर्जथूनां भृकुटिविलासाः, शान्तिमन्त्रपाठिन्यो ज्योत्स्नाः, आलोकतिमिरनीराजनानि, मानवजीवनसार्थकत्वस्य प्रश्नचिह्नानि साटोपानि नदन्ति, गर्जन्ति, नरीनृत्यन्ति धारावत् समुपतिष्ठन्ते । ते च सर्वे प्रमाक्रियाविशेषाः खलु कविताया निर्झरिणीप्रवाहे असंवरणीये उदग्रोद्दामवेगे प्रस्फुटिता गत्वरा यात्राप्रवणाः सर्वत्र रसाभिषेकशीलाः । गीर्वाणवाण्या मृदङ्गस्वराः, वज्रघोषाः, मसृणकौशेयप्रगीतात्मकता तु केवलं तस्य सर्वस्य माध्यममात्रमेव । एतत्सर्वं सर्वदा अनायासम्—एतन्नूनं च स्वतः धारानिसृतिः (Spontaniety), हिमश्रथः, पीयूषस्रुतिः, उत्कृष्टसाहित्यस्य काव्यस्य च कश्चित् समयः किञ्चिल्लक्ष्म इति परिचीयते, स्वीक्रियते सङ्गृह्यते तथा ।

मम मानसे शैशवादेव साहित्यस्य प्रसङ्गे अद्यावधि अद्भुतरूपेण बद्धमूला भावप्रवणानुरागदृढाः संस्कृतहिन्द्याङ्ग्लफ्रेञ्चजर्मनरशनेटैलियन-पोर्चुगीज-स्पैनिशग्रीकभाषादीनां कविताः । तत्र सर्वासां भाषाणां काव्येषु स्वल्पं वा पर्याप्तमात्रं वा एतादृशं यत्तु नहि शताव्दसीमाबाधितम् । तद्धि न कदापि केनापि प्रकारेण बाधितुं बन्धितुं शक्यते । काव्यस्य ब्रह्मानन्दकृते एतन्ननु ब्रह्मसन्दर्भोपेतं दिक्कालादवच्छिन्नत्वम् । अमरत्वमनुपमत्वमपि ममाभिमते सर्वोत्कृष्टकाव्यस्य एकोऽद्वितीयोऽलङ्कारः । श्रेष्ठ-काव्यं कस्यापि प्रकारस्य पुनरावृत्तिं नेच्छति, न सहते, प्रत्युत तस्याः दूरात् परिवर्जनं करोति । आङ्ग्लमहाकविं शेक्सपीयरं प्रशंसता केनचिदालोचकेन साधूक्तम्—'Shakespear was never twice at a point' ( शेक्सपीयरेण न किञ्चिदपि द्वितीयबारं व्याहृतं—काव्ये न पुनर्निगदितम्' इति ) ।

'कला कलायै' 'सोद्देश्या' वा, एषोऽहं सर्वथा स्पष्टरूपेण कथितुमुत्सहे यत् तत्र यथाशक्ति देशकालसीमाभिरबाधितस्य कृत्स्नस्य दृश्यादृश्यजगतोऽन्तर्बाह्यसंसारस्य च सर्वाश्लेषी सन्दर्भः समाविष्टः स्यात्—तस्याधानं, समाहरणं, सन्निवेशः, सम्पूर्णविवृतिर्नितरामपेक्ष्यन्ते' इति । परन्त्विदं नूनं स्मरणीयं

यदसौ सन्दर्भः ( प्रासङ्गिकत्वं ) नहि वनस्पतिशास्त्रप्राणिविज्ञानभूगोलेतिहासादीनां काचित्तालिका भवितुमर्हति—न चापि तथा समायोजनीया—न कदापि भविष्यतीति। तत्र हृदयस्य मस्तिष्कस्य सञ्चरणं, क्रियाप्रतिक्रिया, बिम्बप्रतिबिम्बभावस्फुरणं, मुकरत्वनिदर्शनं, बहुविधचित्रणं, सुष्ठु अभिव्यञ्जनं, सम्प्रेषणं—'सर्वं नितरामभिप्रेतम्' इति।

कविताप्रसङ्गे उदात्ततायाः यत्किञ्चिदपि स्थानं स्यात्, किन्तु सा साम्प्रतं खलु काव्यतत्त्वानां पङ्क्तौ किञ्चित् समुचितस्थानमर्हति—निःसंशयमपेक्षते। एतदङ्गीकरणं सर्वथा श्रेयस्करम्।

इत्थम्भूतलक्ष्मे स्वीकृते गम्भीरविषयाणां—ते युगबोधोत्पन्ना एव भवेयुरप्युताहो—महतीनां समस्यानां च समावेशोऽपि तस्यै कवितायै सुपुष्टास्थिमांसवन्तं न केवलं कलेवरं ददाति, वरञ्च 'ईश्वर-अंश जीव-अविनाशी' इत्थं सङ्कीर्तितं गुणात्मकमन्तरात्मानमपि प्रयच्छति। परिप्रेक्ष्येऽस्मिन् काव्यं—समग्रतया सर्वासु दिशासु सहितस्य भावमाहरदायोजयत् साहित्यमपि—मानवतायाः उत्थापनस्य लक्ष्यम् ईषन्मात्रं पुष्कलमात्रं वापेक्षते—तस्य सिद्ध्यर्थमुत्सहते प्रयतते च।

कविता क्षणमनुरञ्जयति, कणं किरीटीकरोति। तथैव प्राणानां—तेषां स्पन्दनानां सातत्यं साकल्येन समर्जति—समाहरति। वस्तुतो मनोवेगश्च, तादात्म्यं तन्मयतापि च तत्कवित्वस्य शक्तिमत्तायाः, पूर्णस्फूर्तेर्मूलाधार इव तिष्ठन्ति—सवेद्यन्ते।

प्रायेण कवितायाः अस्यामेव प्रत्यभिज्ञायां प्रत्नाभिधानलिङ्गानुशासनायाः रसात्मकतायाः यथेष्टं सार्थकत्वं सन्निविष्टं संलक्ष्यते। अनेनैव विचारमार्गप्रहितचेतसा भावोच्छ्वासस्य तीव्रत्वं, पर्याकुलत्वं, प्राधान्यं च सुधाकरस्य सुधा इव तिष्ठन्ति, विराजन्ते, कार्यकारणसरणिं कृत्स्नां निष्पत्तिं प्राप्नुवन्ति। बुद्धितत्त्वं तु चेतनाचेतनोपचेतनमस्तिष्कस्य प्रच्छन्नान्तरङ्गजीवन्तपुद्गलवस्तुकोषसदृशमवलोक्यते। शल्यविश्लेषणानन्तरं तत्तु सर्वग्रथनसूचीयन्त्रसत्त्वमपि व्याहरणीयम्।

तत्तु नग्नरूपे—अनावृतरूपे निष्कास्य लेखनाधारे, चतुष्के, त्रिफलके कर्गदे वा स्थापितं रक्षितं स्यात्, एतन्नूनं यदि कवितायाः न वीभत्सत्वं, तर्हि खलु विरूपत्वं—नात्र संशयः।

अत एव विश्वभाषाणां केषाञ्चित् कवीनां सन्निभः नाहं कवितानुगतातिशयबौद्धिकतायाः समर्थकः सम्पूजको वा। अस्मिन्नेव प्रवाहे प्रवणत्वे तज्जन्यायाः तदर्धाभिपूतायाः विस्मयविस्मितचारुनेत्रकारिण्याः सम्भ्रमजनयित्र्याः प्रवृत्तेरपि कृत्स्ना सीमा सम्यक् स्वीकार्या परिचेया च। विस्तारेणालं—सा प्रवृत्तिस्तु न सुबहु अभिलषिता।

नग्नमश्लीलं, सर्वथा अकथ्यं, यौनाचारादि कथ्यकारिणी अत्याधुनिका प्रमदा वीभत्सा शालीनत्वापहारिणी भद्रत्वहन्त्री प्रवृत्तिरपि अनेन कविना औचित्यं प्रति नितरां निश्चलाजस्रास्थासंवलितत्वात् सिद्धान्ततो दूरात् परिवर्जिता । मधुरचारुतरसंयोगविप्रलम्भशृङ्गारेणैवानेन काव्यसाधकेन परितोषः कृतः समुपलब्धः ।

एतेषां मूल्यानां, हृदयमस्तिष्कगतबोधविकासानां, निर्जरप्रमाणां, सदर्भाणां, परिप्रेक्ष्याणां विद्यमानत्वात् स्वीकरणाच्च, वैयक्तिकमानसिक-संरचनाकारणाच्च अभिनववाग्धाराणां, प्रत्यग्राभिव्यञ्जनानां, सद्यः सृष्टभङ्गीनां नवदिशानाम्, अभिनवायामानां, नूत्नशिल्पशक्लोन्नयनस्य नवीनबिम्बविधानादीनां स्वयमेवोद्घाटनं, तेषां पूर्णदिक्साम्मुख्य( Orientation )पूर्वकं मदीये वाणीविताने स्वरसंयोजने चावाहनं, मूर्तीकरणं चानायासं स्वतः सम्पन्नानि दरीद्रक्ष्यन्ते ।

एवं 'क्वणति किञ्जल्कः, ध्वनति वज्रः'—साकल्येन 'शब्दब्रह्मसपर्येयं' **'सम्भूयमहाकाव्यम्'** इत्यपि मया स्वोपज्ञतया प्रत्यग्राविष्कृतेन नवीनाभिधानेन सविशेषं नितरां शोभते—बहुजन-बहुचेतना-बहु-संवेदना-संसृति-सरणात् ।

वाग्देवीं, तस्याश्च साधकान् सर्वान् तथा काव्यानुरागिणः
सहृदयान् प्रति चात्यन्तसमर्पणपूर्वकम्,
अद्यत्वे एतद्विरामपर्यन्तम्,
अग्रे अन्येषां सुधियां प्रतिभानां च कृतेऽपि
साहित्यसुधायाः आवाहनपुरस्सरम्
इत्थमुपतिष्ठते
विबुधवाणीसमुपासको
विश्वसाहित्यसपर्यासंवलितो

**—मायाप्रसादत्रिपाठी**

## सम्पुटसंज्ञाः

---

# १. सिन्दूर-राग-विकिरणम्

आकाशसिंहासनसंहृताङ्गः
सिन्दूररागं चलकेतनस्य ।
आकम्पयन् पश्चिम-दिग्विभागे
संयाति सूर्यो दिवसाङ्कपाल्याम् ॥ १ ॥

पीतांशुकव्यायतनीलमार्गः
आलोककान्ति द्रुमराजिलग्नाम् ।
हेमस्य चूर्णं वसुधाञ्चले च
यात्रान्तयातः स हि वर्षतीव ॥ २ ॥

समुद्वहन्तीं जलवीचिमालाम्
उद्वेजयन्नीलदुकूलिनीं ताम् ।
मरीचिसूत्रैस्तटिनीं सुहासाम्
वध्नाति रक्तैर्रशनाकलापैः ॥ ३ ॥

सौवर्णवर्णाः सिकताङ्कशोभाः
कृत्वा सहेलं द्युति-सङ्कुलाश्च ।
ध्यानस्थवेशो हरिदश्व एष
आभाति नूनं मुनिसन्निभश्रीः ॥ ४ ॥

वियोगगीतिं सुगुणानुवादम्
उच्चैर्विरावैरभिवन्दनञ्च ।
वृक्षाऽग्रनीडाङ्कसुखासनस्थाः
कुर्वन्ति राज्ञो मृदु पक्षियूथाः ॥ ५ ॥

हिमालयः स्वर्णकिरीटधारी
तुषारसौधे नतशीर्षभागः ।
पुष्पैर्विकीर्णैर्जलधारसक्तै-
रर्घ्यं विधत्ते गगनेश्वरस्य ॥ ६ ॥

व्यालम्बवस्त्रायतमूर्धदेशा
वेलानिलैश्चालितगात्रयष्टिः ।
चञ्चत्तरङ्गेष्वियमम्भसो नौः
संयाति हर्म्यं नु दिवाकरस्य ॥ ७ ॥

यानस्थपान्थः कलकण्ठगानैः
सन्ध्यां हि सुस्थो मुखरीकरोति ।
तोयस्थबिम्बं कमलेश्वरस्य
नौका नु चैषा परिमार्जयन्ती ॥ ८ ॥

पद्मं गता विस्मितचारुनेत्रा
व्याकुण्ठिता सम्प्रति नीरलक्ष्मीः ।
एकाकिनी साध्वसजातखेदा
ध्वान्तं समासाद्य विलासिनीव ॥ ९ ॥

दिने भ्रमन्त्यन्तिमभूमिभागे
ग्रामं प्रपन्नानि च गोकुलानि ।
वंशीसमाकुञ्चितहस्तगोपाः
आयान्ति सञ्चारितरम्यरागाः ॥१०॥

सीमान्तदेशा निभृताङ्गचेष्टाः
शालीक्षुकायाः प्रियशाद्वलाङ्गाः ।
पश्यन्ति मुग्धा हरिताम्बराश्च
पङ्क्तिं विधाय प्रसृतोर्ध्वकण्ठाः ॥ ११ ॥

चित्रं विचित्रं रुचिरञ्जितं यद्
विलीयते दीधितिकर्षणैस्तद् ।
दृश्यं यथा चित्रपटान्तनद्धम्
अन्तर्दधाति प्रतिरुद्धदीप्ति ॥ १२ ॥

अश्वेतपाणिर्निविडान्धकारः
कालातपत्रः सुखमुक्तबन्धः ।
स्वैरं विहारी वसुधाङ्कमध्ये
आविष्करोति प्रतिमां स्वकीयाम् ॥ १३ ॥

ब्रह्माण्डदीर्घं पटलं हि तस्य
तत्त्वान्ततुल्यं गतिमन्थरं तत्
विन्यस्तवर्णस्फुटलेखकीर्णम्
भातीव गुप्ता नरभाग्यपङ्क्तिः ॥१४॥

चन्द्राननं वीक्ष्य निशाङ्गनाया
आरूढमौग्ध्यं नवभर्तृकायाः ।
तारासु कृत्वा स्वसखीसुमौलिम्
अन्तर्दधे मौनविनीतसन्ध्या ॥ १५ ।

## २. प्रत्येकभाषायाम्

प्राणेषु प्राणेषु स्पन्दन !
हृदये हृदये धमन !
भव साकारो हे !
चेतनताया अन्तिमसीमानः !
निजाशीर्भुजयोः सम्पुटीकुरुत हे !
विकचीकुरुत हे !
अङ्घ्रेरङ्घ्रेरुर्जा-गतिवल हे !
चेष्टानां भाषित चापारिभाषित सम्बल हे !
जडताभ्यो देहि त्वरणं सकलम् ।
तमसः कणस्य कणस्य नित्यालोक
सदा नवल हे !
जीवनस्य जीवनस्याग्रे शाश्वत सञ्जीवन हे !
प्रतिमानां स्फुरणमय चाप्रतिम हे !
नयनस्य नयनस्य जागरनिद्रास्वप्नानां
परमतुरीयस्वयम्भासित
निर्वीजाञ्जन हे !
स्रष्टः मार्गाणां, सङ्घर्षाणां स्वामिन् हे !
नराणां, नक्षत्राणां, ताराणां, नीहाराणां
यात्राणां सर्वायामिन् हे !
प्रत्येकभाषायाः प्रार्थनायाः
अजर अमर अक्षर हे !
सम्मुखं क्षणानि खण्डविखण्डितानि भवन्ति
कणानि तथैव चूर्णविचूर्णानि भवन्ति
सर्वेषां सूत्रं गणितफलं भव, औचित्यं रचय
सामञ्जस्यं भर !
सकलानां दिशादशानामाद्यन्तहीन
आकाराणामाकारहीन
सत्य शिव सुन्दर
मुकुरपरात्पर हे !

## ३. सर्वप्रथमः

शून्ये संख्यासरिमा
पुंसि स्त्रियां नपुंसकभेदे भाषाहीनो महिमा।
योगक्षेमसवीजसमाधौ पृथुसंवेदनलघिमा।
निर्बीजे त्ववधानेऽविदितः सत्ताहीनो ह्यणिमा।
मरकतवाते संयानपथे स्वस्तिसुधाकरगरिमा।
पाषाणीराशौ शैलानां सुप्तिश्वासम्रदिमा।
आशीर्वचसां ननु सकलानां प्रणतेः प्रांशुप्रतिमा।
आदीनां चेत्यादीनां 'तन्मात्रं' संज्ञा ह्युपमा।
व्याकरणं व्युत्पत्तिर्ह्योमिति भक्तिविभक्तिः प्रथमा।
तमसो रविनीराजनतृप्तिः खलु परमकुटिलपक्ष्मा।
तर्कभ्रान्तिर्लक्षणहीना वै गणितादिकलक्ष्मा।
वर्णः प्रथमः शब्दप्रथमो ह्यर्थादिकभा प्रथमा।
किं रूपाणामभिधानानामष्टावक्रजसुषमा ?
सर्वप्रथमो द्राघिमा।
शून्ये संख्यासरिमा।

## ४. आशीर्वादान्तम्

सुधाधवलाद् हंसद्युतियुतायस्कान्तात्
पुष्पकविमानात् सुधाकरः पौर्णमास्याम्,
अवतीर्य रभसा मम वातायनं सम्प्राप्तः ।
तत्र क्षणमवस्थितोऽभ्यन्तरे दृष्टवान् ।
ततः स्मितिदूतान् प्राहिणोद् अर्धसुप्तस्य ममान्तिके ।

निमेषान्तरे सहसोत्प्लुत्य कक्षान्तः प्रविष्ट
आसन्दीमधितस्थौ ।
तदनन्तरं भूग्रहशान्तिमधिकृत्य
एकां कवितां मम स्वप्नान्
स्वमुखेनोच्चार्य आलेखयत् ।

उपसंहारे न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम् ।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम् ॥'
प्रार्थनां प्रस्फुटं मधुरमधुरस्वरेण ।

सञ्ज्ञाय मम शिरः स्वाभयवरदहस्तैः
संस्पृशन्, आशीर्वचसा
मामकीनोपचेतनाचेतनमस्तिष्कम्
उद्‍वोधयन् बहिर्निष्क्रान्तः
पुण्यसलिलापथप्रयातः ।

## ५. अर्गला

शेफालिकेयं काचिदर्गला
तत्र विकसति कोऽनुबन्धः ?
कण्टकिता सेवतीयमप्यर्गला,
स्मेरानना क्रान्तिस्तत्र ।

वंशावलीयमर्गलासन्ततिः
बन्धितुं प्रयतते तारावलीममूमपि ।
आम्रनिकुञ्जोऽयमर्गलानां
पृथुलविपुल-समाजो
बध्नाति ग्रामं नगरं सीमान्तम् ।
शाश्वतार्गलानां मिथो
हस्तधृतिरास्थितिः क्षितिजम् ।

शाश्वत्योर्गलाशू छित्वा
मानववपुरभिषेकी
समीर एष आकाशतरङ्गं
त्वरां च व्याप्तिपरामन्विष्यति ।

## ६. उल्लसिता आयामाः

शर्वरी विहसति
यौवनं विलसति
दुग्धधवलाः प्राणाः
चञ्चत्पुष्पायुधबाणाः,

सुगन्धिः संलपति,
समीरो नुदति,
चन्द्रिका-प्रहरे
कामधेनुश्चरति ।

तारकाः सङ्केतयन्ति
तारिकाः अभिसरन्ति
निशिगन्धा पृच्छति
सेवती प्रत्युत्तरति
रोमाञ्चस्य प्रत्यभिज्ञाम्
उत्कम्पस्य सद्योऽनुज्ञाम् ।

आशते मञ्जरितसहकारः
प्रकाशते ध्वान्तमधूकविकारः
स्मेरा विवृतमञ्जूषायां स्वप्नाः
वंशिका-वादिकाः कल्पनाः ।

वेला नयति मरकतस्थाल्याम्
मुक्तारांशि यात्रापाल्याम् ।
कौमुदी गीतं गायति,
वल्लरी वल्लभं ध्यायति,

पुष्पितसर्षपपीतप्रणयः,
निशि निर्झरति सुधाविनयः,
गोधूमो ह्रस्वसुकुन्तः
चणको ग्रन्थिलपान्थः
कलायो विन्दुलरोमन्थः
अतसो विभर्ति नीलां क्षुद्रघण्टिकाम्
यवो वितनोति करवालं क्षुरिकाम् ।

उपगूहत्यूर्मिस्तुङ्गं चन्द्रम्
सीमान्तोद्वाहे रावं मन्द्रम्
प्रचलत्सरिता कुरुते सान्द्रम् ।
परावाणीं वृन्तं संवदति
पश्यन्तीं कलिका निगदति
मध्यमां मुकुलो सुभणति
वैखरीं विकचं पुष्पं प्रलपति ।

आह्लादितहृत्सीमान्ताः
आलोडितसत्ताप्रान्ताः
सकला आप्यायिततरला
हर्षत्तन्मात्रायामाः
चन्दनवनपर्यन्तम्
मृग्यति कं वै यामा ।
क्षीरोदधिरामा मनोभिरामा ।

## ७. निक्षिप्ताः पन्थानः

निक्षिप्ताः पन्थानः कक्षकर्तकानां कक्षेषु,
दिवसाः पुस्तकचिह्नानि कृता गोपिताः
देवसेनापतिप्रणीत इन्द्रजालग्रन्थसंरम्भे ।

विश्रामपीठा निशाः
परमाणूकृता शुष्कायां मसिधान्यामारोपिताः
गन्तव्यं गम्भीरगह्वरे निपात्य पिहितं पाटितम् ।

श्येनवकपङ्क्तयो वञ्चयन्ते
पर्युषितवृत्तं संश्राव्य सश्राव्य मधुरम् ।

नीहारमिहिकाप्रालेयप्रभातप्रकाशाः
मिथश्छद्मप्रपञ्चेनावरुन्धन्ति
परिणाहान् ।

चरणयोर्गण्डानामुपरि पिटिका अन्या अन्याः
सञ्जायन्ते पदे पदे ।
'येषां शाश्वतिको विरोधो' दरीदृश्यते
सूत्रं शब्दराजस्य ।
किं ? कथं ? के ? कियन्तः ककारा एव
कृत्स्नां यात्रावर्णमालामपवहन्ति ।

## ८. उद्दामाप्लावनम्

यदा तरवोऽसितकम्बलावृता जृम्भिता
घोरनिद्रानिमज्जिताः,
यदा दशेङ्गितानि श्वासहीनानीव
संज्ञाशून्यानि, निद्रोपगूढानि
यदा निशीथिनी निर्बीजसमाधिमापन्ना
परमतपोनिष्ठेव नीरवा,
यदा समस्तवातावरणं हृदयकम्परहितमशेत
स्तनन्धय इव निस्पन्दः,

तदा क्षमाभ्यन्तरात् सम्भवा भूकम्पाः
क्षोभयन्त्याकुलयन्ति चैतां नदीम्,
सलिलस्य द्रवप्रकोष्ठात्
जातोद्गीर्णा झञ्झा घूर्णयति
वक्षसि कृत्स्नं सुफेनोत्सेधं कचाकचि ।

तत उदग्राप्लावनमभ्रं लेढि,
तडित्सन्दोहमात्मसात्कुर्वाणां
तटिनीं निःसीमाट्टहासविवर्वा
करोति समुद्रा इव पर्वणि
सर्वतः सम्प्लुतोदके ।

तद्व्युत्प्लुत्य रौद्रं निगलति ग्रामान्,
ऊर्मिमेखलानि कुण्ठितावयवानि नगराणि,
स्वर्गसोपानस्थिरान् सप्तर्षीन्,
नभोमन्दाकिनीं हस्तामलकीं कुर्वाणं गुरुम्,
अविचलितं दिग्दर्शकध्रुवम्,
किं बहुना समग्रव्योमधरणी ।

आप्लावनमाप्लावनं निःशब्दाः
कोलाहलः सर्वेषां सुषुप्ता अपि
कर्णं बधिरयन्ति ।
अचेतना तत्र निमज्जिता
अहमहमिकाऽपि सर्वा ।

## ९. त्रयो नञः किमर्थं गमयन्ति ?

'ह्यः' गृहाभ्यन्तरे प्राङ्गणे
अवनतमुखो निर्विण्णमर्धमृतको
भृशं रुष्टस् तूष्णीं स्थितः ।

'अद्य' द्वारि कलहायमानो वारं वारं
अपशब्दान् क्षिपति तुमुलकोलाहलं,
शिवेतरं कर्त्तुं वाग्बाणैर्वेधयति ।

'श्वः' वंशमात्रोपन्यस्तायां पर्णशालायामस्फुटवाक्
प्रभूतं वक्तुमना विश्रान्ताक्षराणि
मनागुच्चारयति ।
वपति भीतिबीजानि ।
अङ्कुरयति शङ्काः ।
द्वौ नञौ प्रकृतार्थं गमयतः,
वद मनीषे ! त्रयो नञः किमर्थं गमयन्ति ?

## १०. खुरलीयम्

शौर्योल्वणानां स्फुटितकण्ठानां
जीर्णशीर्णोपानहां
मल्लाह्वानस्य ज्याघोषाः बहुशरीरेषु,
व्रणाक्रान्तानां त्रुटिताधराणामण्डानां
'चूं चूं' इति कलहमाना रवाः
वस्त्रेषु दुग्धधवलेषु,

विद्रधिभिन्नपर्युषितटर्माटराणां
नगरं शिरसि सततादधाना
दशदिशो व्यनुनादयन्तोऽश्रव्यवैखरीनादाः
रक्तमुद्राराक्षसाः
कौस्तुभभूषणेषु नेतृवक्षःस्थलेषु
आसनासनिमुष्टामुष्टिदण्डादण्डि-
प्रेमप्रदर्शयित्री
पश्यतां तुमुलकोलाहलाकाद्भुता खुरलीयम्
अनियन्त्रितविक्रमेषु ।

## ११. अद्यत्वेऽपि नोपालभते महायात्री

दूनाः पन्थानो व्रणार्ताः
संज्ञाशून्याः स्फोटक-प्रपीडिताः
अपशब्दक्षुब्धा वाचावष्टम्भाः,
यात्रेयमशरणा महायात्रिन् !

शरणं याचते त्वामेव
जीर्णजीर्णा ध्वंसावशेषा
खञ्जा भीतभित्तिः धर्मशाला
विडम्ब्यते दूर्वादलैरपि
वज्रलेपरेखाङ्किताया सैर्मृत्तिकापरिहासैः ।

दिशा दिशा हृदयोत्कम्पा स्खलितपदवी
विद्रवन्ती
सञ्जाता ब्रह्मराक्षसस्य केवलं किं वदन्ती ।
पलायितुकामः पवनो वृक्षशाखाभ्यो
गलामोचनाय प्रयतते ।
धन्यस्त्वं महापथिको यच्चलसि च चलसि च
ब्रह्माण्डपरिणाहादधिकस्त्रिविक्रमः साहसस्ते सुयशसे
सर्गविसर्गयोः सन्धि वितनुते ।

## १२. इतरो हालाहलपायी

अयि तरुराजिसंज्ञे !
अयि लतेङ्गितानि !
अयि सकलवर्त्मनाम्
अङ्गुलिनिर्देशारपङ्क्तयः
श्रूयन्तां नगराणां सौधानाम्
उच्चैरवलोकनानि !
श्रूयन्तां ग्रामप्रान्तरस्य
मन्दारावाः !
सीमान्तानां मूक-जिज्ञासे !
अवधेयं ! कान्ताराणां
हरितस्वरनीलप्रतिध्वनिसरस्वति !
युष्माभिर्न संलक्षितो विषपायी
दिगम्बरः कदाचित्क्वचिदपि !
कालनागाः
कालवृश्चिकाः
कालोर्णनाभाः
तेषां विषष्ठीवनं यद् दरीदृश्यते सर्वत्र
कज्जलाकारप्रेतानां
कालोच्छ्वासा अवरुन्धन्ति
श्वासान् यज् जीवितलेखानाम् ।
मसिवर्णाश्चेतावन्यः
कालनीडात् सुषुप्तिदिशाकाकाः,
यद् दुर्भेद्यं सर्वमुत्सृजन्ति,
तत् क्लिन्नशुष्कं विषसङ्कुलत्वम्
अञ्जनरञ्जितानां मरुप्रपाणां
तिमिरत्रपाणां हालाहलप्लावनं
नित्यं पीयतेऽस्माकं समक्षं येन,
सोऽयं नित्यदेवः प्राक्प्रभावान्,
कृत्स्नप्राणक्षमावान्,
रौद्रभासो शमावान् ।

## १३. अस्फुट कोलाहले प्रणयवने

( पातालभैरवी रागिणी )

गायति गीतं स्मेर-शर्वरी !
प्रणयाकुला लिखति कुमुददले
प्रणयपत्रिकां सुरभि-गुर्जरी ।
गायति गीतं स्मेर-शर्वरी !

बुद्बुदस्वर-सङ्कोचि तु गगनं
ज्योत्स्नां रहसि वदति मृदु तरलम् ।
उपवन-वर्त्मनि राजत-वीणां
पाटलकलिका मूर्च्छितमीडां
वादयते, शृणोति च वल्लरी ।
गायति गीतं स्मेर-शर्वरी !

छाया मृग्यति विहगविहागम्;
श्लिष्यति पवनं भृशं सरागम् ।
उद्दिश्य मधूकं ननु तरुणं
नर्माणि युङ्क्त आम्रमञ्जरी ।

गायति गीतं स्मेर-शर्वरी !
निद्रां पुलकनिमीलितनयनां
स्वप्नः कण्डूयति मधुवचनाम् ।
धमनी निःस्वनस्वनितवंशी,
शान्तिः प्रमदा मूकनिर्झरी ।
गायति गीतं स्मेर-शर्वरी !

## १४. आसक्तिप्रणामाः

शैलराजाद्  रत्नोदधिपर्यन्तम्
अभिसरज्जीवनोत्सुकता
सुकुमारी तरला पुण्या  सततयियासा
आप्रत्यूषं  स्मितहासयुता  जिजीविषा
सुरसरिन्नामधेया-
खल्वासक्तिप्रणामाः—
नूनमुत्सेधविवर्तनम् ।

तडितः  कालीकबरी
जलमुचः  काकपक्षः
कादम्बिन्याः  कादम्बरी
इन्द्रचापे मृगतृष्णायाः सप्तरङ्गाया
वर्तन्या तूष्णीं नर्तनम्
उत्सेधस्येदं विवर्तनम् ।
क्षमायाः कृते संस्तुतिः ।

तमिस्रायां  बुद्बुदमुदाः
राकायां  चन्द्रमाः
खस्वस्तिके  सप्तर्षिलेखा
अखिलप्रश्नानामुत्तरे
ध्रुवस्य  दिग्-रेखा ।

'क्षमाया शुभं भूयादिति'
प्रकाशवर्षाणामनन्तायामा
स्वस्तिस्वस्थव्यापृतिः ।

## १५. उन्मेषविवृतिः

### तृप्तिः

सौन्दर्यस्य वेलासु केनचित्सुमनसा
गीतं समारब्धम् ।

शब्दैः पुलकितार्थैर्धराव्योमद्वयं सरसितम् ।
गन्धैः शतशतकोटिकताराणां तालमुदीरितम् ।
मधुकरैर्मधूनां कियन्माधुर्यमास्वादितम् ।
पुष्पदलानां स्फुरितमसृणालिङ्गनेऽलिः
प्रेङ्खामनुभवति ।

विह्वलतायाः प्रहर्षाणां क्षणं तृप्तिमुखं
चुम्बति ।

ज्योत्स्नायाः रोमाञ्चे बुभुक्षिता
हृदयोत्कम्पा आप्यायिताः ।

कानि समीकरणानि बीजगणितानि च सर्जितानि ?
यद् राकायाः प्राणेषु नन्वद्यत्वेऽपि
वंश्या बुभुक्षास्वरप्लुतानि गोपितानि !

### निर्वृतिः

न स्फुरतस्तिमिरस्याधरपल्लवौ
आलोकः स्पृहाविरहितो निवातो निष्कम्पो
न कलिकां पश्यति, न शाखां, न फलम्

न च कीदृशमपि विकचीकरणम्,
न च वृक्षं, न च वृक्षच्छायाम्,
न समीरस्य कस्मिंश्चिदपि नीडे
संज्ञा कुरुते काञ्चिदपि मायाम् ।

अभिधानविरहितश्चाह्लादस्तस्य
नक्षत्रपरे गगनायामपरे विस्तारः,
भुक्तेर्मुक्तेर्मोक्षस्य च फलागम एष
श्रेयस् प्रेयस्सारः ।

आदर्शः

विहायसस्तत्रेषन्नीलिमाऽपि शुभ्रा धवला
विम्वनं प्रतिविम्वनं च दर्पणस्य सर्वाः
प्रक्रिया उज्झित्वा समाहितसंवेदनायाः
क्षमाया विवृणोति श्रेयः,
विवनक्ति प्रेयः ।

अजरामर काँच ! न त्वया सम्प्रति स्फुटनीयम्
स्वधावषट्-योगक्षेमपुरस्सरं न त्रुटनीयम् ।
नोत्सङ्गपरिष्वजनं कीदृशमपि नटनीयम् ।
घटिते दुर्घटिते न किञ्चिदपि घटनीयम् ।

## १६. न हि कमलकोषः

कमल ! त्वं विकचम्
कृत्वा रूपसार-निषेकं
निजकोषसमाहितप्रवणम् ।
लोकोत्तरानन्दस्य न हि श्यामः
शुभ्रश्वेतद्विरेफस्तत्र मधुविसर्पे
स्वचैतन्यं तत्याज ।

प्रकृतिपुरुषयोस्तदसंवरणीयोन्मेषस्यान्तराले
सञ्जात आत्मलीनः ( किं वा ब्रह्मलीनो वै ) ।
पुलक ! रसोद्रेक ! च
युवां सान्द्रह्लादहस्ताक्षरितानां
पुष्कलावस्यायविन्दूनां
साक्ष्यं लभेथाम्, न लभेथाम् !
स्वीकुर्वाथाम् न स्वीकुर्वाथाम् ।

रागारुण विराड्वोधकासारवक्त्र !
अन्तरिक्षावकाशे प्रत्यभिज्ञाकोषः
कमलकोषः, न हि कमलकोषः
शब्दकोशः
( प्रतिवदतु कश्चित् ? ) ।
के केऽत्र कस्मिन् आलवाले स्थिता
किं किं पश्यन्ति चक्षुर्गोलकेषु परिच्छायापरिप्लुताः ।

## १७. क्षणिकाः

### प्रतीक्षा

अस्य भूकम्पस्य, तस्या ज्वालामुख्यः,
तडिन्नीडस्य तस्य नीहारस्य
दुग्धान्ततायास्तस्मिन् पारे
रक्तकणानां कस्मिंश्चित् सन्देशे सारे
तस्य प्राणवत्स्फुरणं शीर्षकं च
साम्प्रतमपि जीवतो जीवतश्च।

### पीडा

कण्टकानां सुगन्धिः, ज्वालायाश्चन्दनावलेपः
व्रणानां पुरस्कारः, तर्कस्य परिष्कारः,
हृदयस्य संस्कारः,
सङ्कणकस्य तिरस्करी,
स्फुलिङ्गानां तस्करी।
अयि धर्मोपदेशिके!
आस्थायाः सम्राज्ञि!
धूनोसि शाद्वलाङ्गनि!
धुनोसि बन्धूकवीथिं!
कौमुदीकुट्टिमोत्सेधं धुनासि!
धुवसि रक्तपरिभ्रमणपरिसरम्।
मस्तिष्क-संवृतिम्!

### व्रीडा

कलिका स्मेराननापि न हसति,
बुभुक्षा परिधानवती न ध्वनति,
सङ्कुलतानिमन्त्रिता एकान्तरागी शब्दो न स्वनति,
उन्मादवाचालः प्रणयो गिरा दोलितोऽपि
न किञ्चित् क्वणति
केतकीप्रस्तावनायशस्यप्रसारे
हृदयेश्वरि! तवद्वारे।

## १८. दुःखं न हि परिभाषा, युष्मत्कृते

उद्यानस्यैकं पुष्पं तस्मिन्दिवसे
त्वां मन्त्रमुग्धं व्यदधात।
तत्तव हृदये ननु व्यापृतम्।
कोशिकायां कोशिकायां वसतिः कृतैतेन।

साहि व्याप्तिः बीजवत् सञ्जाता
सर्वथा बीजमेव।
ततो वक्षसि कण्टकानां कश्चिद् गुल्मः
समुद्भूतः स्यान्नागफणः।
तस्य केवलं कण्टकः कण्टकः
अन्तरतमस्य नवनीतसदृशयोरस्थिमांसयो-
रालवाले अहर्निशं सततं तुदति।

अतो युष्मत्कृते दूनोति ममापि हृदयम्।
दुःखस्य परिभाषया अलं
न तेन मे किमपि प्रयोजनम्।
यतो न दार्शनिकोऽहम्।
त्वं नूनं दार्शनिकः स्यात्—
( तव वेदना कर्णकुहरेऽश्रव्यं भणति—
अभीक्ष्णं श्रूयते ),
यत् समुद्रदहनं तद् दुःखं
मौनोऽविचलितो मनागपि
उच्छ्वासप्रतिवादेनाऽपि विना सहसे।

## १९. प्रेम इदमपि

हसन्त्यां संलपन्त्यां जीवन्तायां
काँचकूप्यां केनचित्करेण
कश्चित्कण्टकगुल्म आरोपितः।
स सर्वः काष्ठाधारे तुङ्गे स्थापितः
सुप्रियेऽवदाते सिंहासनेऽधिष्ठितः।
अर्धजीवतो गुल्मश्च तस्य कण्टकाश्च
न जाने किं गुञ्जनं गीतं चारेभिरे।
तस्य बाहूनां कण्टकटितार्धशुष्कप्रसूनेषु
सम्भृतः समिद्ध आलोकः,
असीमताऽपि तथा।
सम्पूर्णकक्षः कृत्स्नं नितरां प्रपूरितः
स्तनन्धयशिशोः स्मितैराह्लादैः
तस्य अनामभिररूपैः पक्षिप्रलेखम्
दृष्टिबन्धकं वाचयद्भिः स्वप्नैः।
प्रेम—एतादृशं प्रेम द्विजकलरववद्
एतयाद्भुतरीत्या पारिभाषितम्।

## २०. आकाशादपि दीर्घतयालम्

दर्पोत्सेके हे विपुलासुर प्रमत्त !
नक्षत्रसन्दोहानां ते वलोर्जयालम्
आकाशादपि ते विपुलतयालम् ।
अन्धमहासागरेऽन्धगह्वरेषु निमज्जनान्ते
सम्भाव्यते परित्राणम्,
प्रशान्तमहासागरस्यातलाधित्यकाभ्यस्त्वं
द्रष्टुं शक्यते उड्डीयमानः ।

न हि शक्यते नेत्रसम्भवे
एकस्मिन् विन्दौ निमज्जनात्
उद्धारस्तव म्रियमाणस्य ।
न ह्येतत्करणकौतूहलं
नूनं गणितसूत्रं दृश्यमानम्
परमाणुलेसरशक्तेर्न ते आकलनानुमानम् ।

## २१. चारुतरालक्ष्यहीनता

आलोको दिशत्यपदिशति,
चुम्बकत्वमाकर्षति
अङ्गपुलकोद्गमं करोति,
ध्वनिश्च सन्दिशति नानादिग्विधानं
सहकम्पनं समवेदनं संवेदनम्

ऊष्मालोडयति विलोडयति शरीरम्
स्मितव्यापारिणीविद्युदुच्छालयति
सुखोन्मेषस्य भयस्यान्तराले तथा,
प्रस्थापयति कादम्बिनी-प्रकोष्ठे
सिंहकन्यामिथुनसान्निध्ये
अनन्ताह्वानपरिवेशे
उत्तुङ्गताभिषेके ।

प्राकृतजनान् प्रयोजनमुद्दिश्य
जीवन्तमेते छादयन्ति—
नुदन्ति किञ्च खल्वर्दयन्ति ।

वर्त्मनि वर्त्मनि चत्वरे चत्वरे
विपणिनिषद्ये
वसतौ वसतौ
सततगतिः
यश्चरन् तपस्तपति
तपश्चर्यार्थमेव
अनुद्दिश्य जगत्प्रपञ्चं
नित्यं कर्तव्यमन्दाकिनीस्नातः,
तपो यस्य चरमं लक्ष्यम्,
तपो यस्य परिनिष्ठापरिणतिः
स हि खलु ध्रुवश्चैतन्यशिरोमणिः
तस्य खलु चारुतरा लक्ष्यहीनता
पथप्रदर्शकत्वपरार्थघटकात्मलीनता ।

## २२. मोहिनी धूमलेखा

रात्रौ हि रङ्गिणी,
स्वप्नस्य किङ्किणी,
त्वं कुत्र सारिके
छायासु निर्गता ? ॥ १ ॥

यूथीषु गन्धिनी,
गन्धेषु छद्मिनी,
त्वं कुत्र तारिके
गीतेषु निर्गता ? ॥ २ ॥

भावेषु सन्धिनी,
स्तवके तु पद्मिनी,
त्वं प्राणराधिके
कृष्णे हि निर्गता ? ॥ ३ ॥

रूपस्य रश्मिणी,
नीहारनन्दिनी,
प्रत्यूपमुद्रिके
सन्धौ हि निर्गता ? ॥ ४ ॥

निर्वाण-वर्तिके,
दीप्तेश्च वञ्चिके
भ्रान्तेश्च भूपिके
चन्द्रेऽपि निर्गता ? ॥ ५ ॥

आम्रस्य मञ्जरी,
द्राक्षात्ममाधुरी,
सूर्यस्य चन्द्रिके
चपलासु निर्गता ? ॥ ६ ॥

कुञ्जस्य वल्लरी,
बहुलस्य शर्वरी,
धूमाभ्रवंशिके
उल्कासु निर्गता ? ॥ ७ ॥

राकात्तसुन्दरी,
श्वासेषु पिञ्जली,
स्वर्गस्य वीथिके
कान्तार-निर्गता ? ॥ ८ ॥

## २३. हृदयेश्वरि ! देवि ! प्रिये !

मेन्धिकाया उपप्लवच्छायायां
शिलीन्ध्रानामाकाशो रक्तपीतं
परागसम्मोहनं गन्धवहमालोकचूर्णं
दिशि दिशि किरति विकिरति ।
प्राग्वंशात्सूर्यः पृच्छति स्वाभिधानम्,
इन्द्रधनुर्विद्धश्चन्द्रो न जानाति स्वसंज्ञाप्रमाणम् ।
हिमानी वैश्वानरः स्तनन्धयो भूत्वा
खलूपालभते दिशाकाशम् ।
परामध्यमापश्यन्तीवैखरीवागवलेहं
लेढि काँचकूप्याः
उत्तुङ्गताया अभिलेखो बुद्बुदायमानः,
स्तनयित्नुर्मुरलीमादाय धावन्ननुसरति
स्वरग्रामं ग्रामे ग्रामे नगरे नगरे ।
हृदयेश्वरि ! देवि ! प्रिये !
कौमुदी तं आवरणं स्वरूपं
वाणीवितानम् ।
कर्पूरध्वनेर्दुग्धधवलनिःस्वनताप्राणम् ।
नीराजनं पश्यति,
आरात्रिकं शृणोति चागन्तुकः
मन्दिरे, मन्दिरस्य गर्भगृहे
हृदयेश्वरि ! देवि ! निखिलसम्राज्ञि !
तव प्रणतिपाते ।
दीप उदाहरति वाक्यज्योतींषि
अव्यक्तराशेर्व्यक्तघाते ।
ब्रह्माण्डपरिसरादेवि ! कल्याणि !
सुमनसि सुमनसि सर्वमाङ्गल्यमयि
पुभावेऽन्तरात्मन् ! अवकाशतरङ्गे ! शुचे !
अर्धनारीश्वरस्यादृश्यापर्णे !
सपर्यार्हे देवि कुसुमाकरस्य सङ्गीतिः
शरदः सायुज्यसुप्रीतिः

प्रावृषः सद्यः सम्भृता सुनीतिः
सर्वशाद्वलसुरीतिः।
अन्तर्वाग्देवि ! निमिषं ! निमिषार्धं !
अहर्निशं ! तवमूर्च्छनामीडे
स्मारं स्मारं स्मर्तुकामोऽयं यन्त्रपुत्रकः
'तमसो मा ज्योतिर्गमय
असतो मा सद्गमय ······।'
'सर्वे भवन्तु सुखिनः, सर्वे सन्तु निरामयाः,
सर्वे भद्राणि पश्यन्तु, मा कश्चिद् दुःखभाग्भवेत्।'

## २४. पेटिकायां नक्षत्रं कथम् ?

भित्तिप्रेमि ! प्रकोष्ठप्रेमि !
शङ्कालु-वन्धु-चतुर !
यदि प्रकोष्ठे सदाहर्निशं
तालकयन्त्रमेव प्रयुज्यते,
कुञ्चिका हृदयोपरि
उत्तमाङ्गोष्णीषे रक्ष्यते,
तर्हि नूनं कोपवदन्धकारस्तत्र
शाश्वतिको भयकारक उपन्यस्यते,

सर्पवृश्चिकव्रह्मभ्रमश्च तत्र
भृशं व्याप्रियते ।
अनावृतं द्वारं देहि सर्वदा
ततस्तत्रानर्घ्यमालोककाञ्चनमपि
वरी वर्तयिष्यते ।
स्फुरणं जीवनजागरं पुष्कलं
पुनः पुनः समेधयिष्यते ।

## २५. इन्द्रियतागमः—अणुवीक्षणयन्त्रमनुवदति किमुत !

शिखराणि श्लक्ष्णनवनीत-सम्पृक्तानि
सोपानान्यवतरन्ति,
आरोहन्ति खल्वाभाणकानि,
मुद्रासिद्धान्तान् नक्षत्राणाम् ।
मूलानि डिम्भः इव निर्भीकं
परिवर्तयन्ति,—
मौनस्य स्फोटो न जानाति,
नासिकायाः पिटिका न जानाति ।
अर्धनारीश्वरमुद्वेजयन्ति
तद्धितकृदन्तलिङ्गानि
मन्दाक्रान्ता-द्रुतविलम्बित-शार्दूलविक्रीडितच्छन्दांसि ।
वटवृक्षाः षड्दर्शनानि वाचयन्ति,
अश्वत्थाः 'औचित्यजीवनम्'
भूयांसि स्वस्तिस्वधा-वचांसि पाठयन्ति—
पुष्पाणि निष्कर्षा, गन्धा अभिषवणानि ।
पवनो जिज्ञासुः, दिशान्ता अध्येतारः ।
वाद्ययन्त्राणि साहचर्ये वंशीरन्ध्राणि प्रविशन्ति ।
रज्जुग्राहका धर्मशालायां समारोहं कुर्वन्ति ।
अतीन्द्रियताया हस्ते कोणा दरीदृश्यन्ते,
सर्वत्रगीतानि त्वरालपक्ष्माणि परामृश्यन्ते ।
प्रत्यूषो वन्दी लक्षितो मशकस्य शिरसि ।
मध्याह्नश्चक्रारपङ्क्तौ अनुधावति,
कादम्बिनीम् ।
सन्ध्या शेते स्वयं, शाययति शैवलिनीम् ।
सम्भूतिं ( जन्मनः पर्यायभ्रमम् )
अनुरेखयन्तोऽर्थाः,
विवदमाना परिप्रश्नाः
पारदर्शितालकं छादयन्ति ।
परिकरबद्धान्यणुवीक्षणयन्त्राणि
चाटुशतान्येव विज्ञापयन्ति ।
कस्य स्वरोऽयम्—
'अथ किम् अथ किम्' ?

## २६. अन्तरालं परिचीयते

त्रसरेणुहृदये पर्वतः,
अक्षरकुक्षौ ग्रन्थः,
ज्योतिरिङ्गणेङ्गिते सूर्यः,
प्रस्तरश्वासलवे तूर्यः,
कनीनिकाङ्के समग्रायामान्तः,
नैमिषारण्ये निमिषमध्ये
निमेषोन्मेषे त्रिकालसामुद्रिकम्,
राजिकायाः लक्ष्मणरेखायां,
कृत्स्नं ब्रह्माण्डं सन्त्रस्तम् ।

पिपीलिकाण्डे
सर्वपुद्गलवृन्दमुपन्यस्तम् ।
पादेन खञ्जं, हस्तेन लुञ्जं
भूतं रक्तकोशिकायां
समाधौ खल्ववस्थितम् ।
वर्तमानं विवृणोति परिणाहभाषाम्
भविष्यच्चान्त्याधिकाशाम् ।
सर्वदेशाद् बहिरान्तरालम्
इत्थं परिचीयते ।

धनावेशः ऋणावेशम्
उत्कलापयति सङ्गणकसम्बुद्धौ ।
समस्तचञ्चल पारदस्य पारेऽपारो ह्युन्मिषति,
अहमिका तत्र धारागृहे प्रविशति ।

## २७. सामीप्योन्मेषेणालम्

कर्हिचिद् बालेन्दुरेषोऽश्वत्थस्य ललाटे
कदाचिच्च वटस्य काकपक्षे खल्वसौ सुधाकरः
नितरामुद्दामं स्मितं करोति

हसति च हसति च,
न वदति न वदति च
स्वमूलस्थानस्य प्रत्ययम् ।
आकाशस्य शून्यत्वम्,
नक्षत्रतारासप्तर्षयः
केवलं केवलं
कण्ठमेव नीलं प्रदर्शयन्ति
श्लक्ष्णं कौशेयमुदाहरन्ति ।

हिमालस्य हिममण्डने
किरीटालङ्कारे
राकागृहे कौमुद्याम्
औषधिनिर्माणशालायां
कर्पूरराशौ
कर्पूरविग्रहवितानभ्रमः,
धरणिकरे, वसुमतीहृदये
तरुराजिकण्ठे सर्पाः,

श्रीमतां गेहे व्याघ्राजिनं
गजेन्द्रपिधानं,
मन्दिरे निषद्ये च
राक्षसानां मनुष्याणां हस्ते त्रिशूलम् ।

खण्डखण्डो विखण्डितः सामीप्योन्मेष एषः
परन्तु क्वानन्दप्रत्यभिज्ञा
क्व खलु कृत्स्नानन्दवादः
कुत्र चाखण्डानाहतनादः
यस्यैते रूपखण्डाः ?
विषपायी दर्शनं नाभ्युपैति !

## २८. सन्दर्भहीनता

आकाशं फूत्काराध्मानेनापास्ताम् ।
पृथ्वीं मृत्तिकरागणेभ्यो ददातु घसनार्थम् ॥

पवनोऽज्ञातोत्तुङ्गत्वं पिवतु,
प्रकाशवर्षाणि वा हरन्तु प्रक्षिपन्तु
प्रांशुविलीनानि पारदर्शकानि गीतानि
स्वरग्रामान्नितरां दूरेऽज्ञातवनोद्देशे ।

शैलान् सप्तवर्णधनुः संहितो बाणः
कश्चिदपाकरोतु ।
सरित्सागरान् कस्यचित्त्रिलोचनस्य
कश्चिदवतारो द्वितीयोऽगस्त्यो वा ।

शोषयतु नयतु वान्यत्र ।
किञ्चिद् विस्मृतिपथप्रयातं
नैतत्पर्यन्तमत्रोपन्यस्तम् ।
तत्तु खल्विदमित्थं स्यात्
पञ्चत्वं गतानि प्रागेव
वसुमत्या पञ्चकानि ।

एतत्सन्दर्भहीनत्वं वरं
न ह्येषऽव्यवस्थितो
महाविपुलावस्करराशिः ।

## २९. तिष्ठ तूष्णीं स्वप्नमुग्ध !

इन्द्रधनुषः सेतुना कः क्षुब्धसागरपारयातः ?
अर्धरात्रे मृदुविहागो भैरवीं गातुं न जातः !
शून्यगात्रीं किरणवालां याचते कः स्वर्ण-कोषम् ?
नैशगन्धामसृणराकां याचते कः सूर्य-रोषम् ?
न्यस्य जिह्वां प्रश्नदग्ध !
तिष्ठ तूष्णीं स्वप्नमुग्ध !
प्रीतिमुखरा प्राण-पदवी रश्मिबद्धा क्षितिजकुटिला,
स्वर्गसरणिर्नरकवरणी शब्दहीना तर्क-जटिला ।
क्लान्तकालः श्रान्तदेशः खञ्जगगनं, लुञ्जधरणी,
अद्य कृष्णा वंशराधा पूर्णभद्रा गणितकरणी ।
रूपशिखरैर्यत्र कुब्ज !
तिष्ठ तूष्णीं स्वप्नमुग्ध !
अमृतसेकः सर्पदंशः वह्निहस्तैः शीतलेपः
कल्पशाश्वतनिमिषविद्युत्, काशवर्षं बिन्दुलेखः !
भासतृष्णा ध्वान्तवीप्सा, तर्पयात्री जलधिरेषः !
वैपरीत्यं यत्र कृत्स्नं, एष किं खलु तृप्तिदेशः !
व्याधलक्ष्यो लुब्धकृष्ण !
तिष्ठ तूष्णीं स्वप्नमुग्ध !

## ३०. तत्रैव गन्तव्यम्

शतकोटिसूर्या अतो न जाने कुतः प्रणष्टाः ।
ग्रहाः सर्वे कस्मिंश्चिदानन्दकानने तिरोहिताः ।
क्रान्त्ययनादिकं वहन्तः कालसुहृदो नक्षत्रयूथाः ।
कस्यचिदाह्लादकनीनिकायां समाहिताः ।
नीहारिकाश्च सर्वा कर्हिचिद् वहिः
विहारिकाः सञ्जाताः ।

कुड्मलानि नन्वाशीर्वचांसि
मुकुलानि स्वस्तिवचनानि
पुष्पाणि विनयप्रणामानि
क्रमानुक्रमैरभिधानानि
दृष्टान्यनभिधानानि ।
विदेहमुत्कलापयित्वा ज्ञातव्यो नीवृद्देषः
मानसरोवरे परमहंसस्य विहरणमेतत्
न कश्चिन्मीनो न कश्चिन्मेषः ।

अनन्तत्वस्येयत्ताहीनत्वस्य
दिक्काललक्ष्मणरेखायाः परे
रामत्वमेतत्प्रमायाः—
ब्रह्माण्डस्वगतभाषितमाकाशतरङ्गे
ऊर्मिलायते, ऊर्मिलायते
तत्रैव गन्तव्यं, तत्रैव गन्तव्यम् ।

## ३१. न तान् प्रति / तत्तु कान् प्रति ?

अणवो मत्ताः
परमाणवः प्रमत्ताः
आशा—काककोकिलानाम्
प्रभागाजितभिन्नानामियत्ताः,
मृकण्डोर्वटपत्रे उन्मत्ताः ।
एतदुक्तं परुत् त्वया
कच्चित् स्मर्यते ?
परं तदेषम एवाकर्णितं मया ।
तदाप्रभृति वर्त्मानि वालरसाले
आरुह्य चोपविश्य चान्नमभट्टस्य तर्कसंग्रहस्य
पाठं परितत्याजुः ।

सान्त्वना कूपीटयोर्नौ प्रचलनम्
सलिलेषु सन्तरणं परित्यक्तवती ।

चित्रपतङ्गकुमारैः पाठशालायां
परिरक्षणस्य त्रयो नियमाः प्रमृष्टा ।
सम्प्रति केचन प्रत्ययाः, उपसर्गाः,
व्याकरणानि, शब्दार्थाः,
शार्दूलविक्रीडित-छन्दांसि,
भुजङ्गप्रयातवृत्तानि

स्फटिकशिलायां जीवाश्मनि
श्लक्ष्णपाषाणे वोच्छ्वसन्ति ।

लुञ्जा दिनाङ्काः, खञ्जा कौमुदी
काणा दिवसा वृथा जीवन्ति ।
विलोमासाधुमूल्यमानयत् त्रैराशिकं
घटीकार्य-व्याजप्रभृतिप्रश्नाः
कुहिमे, गोपुरे विमाने वा दिव्यन्ति ।

## ३२. अभिवर्षन्तु सर्वे जना मधुराणि गीतानि

उपवने च वने च
पर्वते, द्रोण्यां, शिखरे, प्लवे, प्रतरे च
अधित्यकायामुपत्यकायां च,
ऊषरे मरुप्रसरे च
सरितायां कासारे सागरे
छायापथे धरावर्त्मनि च
पाटलेरिते, शेफालिकाभाषिते
शस्यसमारोहे, शष्पसमावर्तने
उपाया नर्तने, दिवसप्रस्थानसमायोजने
हृदयस्य रजन्यां मनसः कौमुद्याम्
वाष्पविताने ह्रासस्मितप्रमाणे
व्यञ्जनानि व्यञ्जनानि
वज्रघोपे किङ्किणीरागतोपे
कालोच्चारणे तालपरिसरोन्मीलने
तानि निरुपायानि, विकलाङ्गानि
सर्वाणि रुधिरस्पन्दनानि
अपेक्षन्ते भवतां भवतां नवनवस्वरान्
उदात्तादीन् त्रीन्,
तन्त्रीगुणान् षडपरान्,
ददतु च ददतु च
तेभ्यो व्यञ्जनेभ्यः स्वरान् सुतराम्
अभिवर्षन्तु सर्वे जनाः
मधुराणि गीतानि नितराम् ।

## ३३. सद्यः स्तवो जीवितस्य

आकाशस्य हृदयं मस्तिष्कं च
भालविषयवस्तूनि च
यस्य परिवेशे प्रकटयन्ति शून्यस्य
नामरूपगुणत्वम्;
पृथ्वी यस्य समारोहोन्वेषणे
संवत्सराणां वसन्ततिलकायोजने
चञ्चलतत्त्वाभिनिष्क्रमणे
ईश्वरत्वं पठति च पाठयति च ।

भूकम्पः स्तनयित्नोस्ताण्डवः
विद्युत्करवालपाशः
ज्वालामुखस्य विकरालोल्वणाट्टहासे
धगद्धगज्ज्वलल्ललाटपट्टपावके
सपर्यास्तवे स्मारयन्ति किञ्चित्
क्षमाप्रसारे मुहुर्मुहुः
कुर्वन्ति क्षमादानम्
रचयन्ति प्राणप्रमाणम् ।

प्रश्नाः स्वप्ना यत्नाः
यस्यालङ्काराः
सुवर्णावसरा यस्य प्रत्याभूतिः
त्रिगुणातीतस्य यः सगुणः प्रतिनिधिः,
तद्धि शिराधमनीस्फुरणम्
शुभं नु यशस्यम्
कर्मणो माध्यमं प्रशस्यम् ।
एतज्जीवितं खल्वेतज्जीवितम्
पृथ्वीक्रोडे
स्वर्गापवर्गक्षेत्राणामपार्थिवसस्यम् ।

## ३४. नाणकपद्धतेश्चलावणीवृन्दस्यापि हानिः

प्रभातक्रेतारः सुहृदः !
(अमित्राणि ! शवानां स्वगतकथनभस्मना भूषिताङ्गम्
उत्पतति इतस्ततः)
युष्मान्, आम्, उपचक्षूंषि ब्रुवन्ति
युष्मान्,
नाणकानि चलावणी च
कुसुमापचय इव
चलचित्रकक्षव्यामोहात्
उत्क्षिप्ता इयत्ताहीने
अभिलाषाकुक्षिगह्वरे ।

यूयं वन्धवो
नक्षत्रदर्शाः
महाशून्यचारिणश्च
हर्षथ, उच्छ्वसथ
समाश्वसथ हीरकाभासे
दीप्तरत्नभ्रान्तापह्नुतौ ।

प्रवालमालिकाः,
कपर्दिकाकण्ठाभरणश्च
काष्ठाहरस्य शिरसि विराजिते
काष्ठनिचये प्रक्षिप्ताः
अदृष्टा विपणिमध्ये
आवारीकानने
अवद्रङ्गभ्ष्टे प्रतिवद्धतावचारप्रलुब्धे ।

देवेशलिखिता जन्मकुण्डली
प्रगतिशान्तिमुखमाना
खडं ख़डं कोटिधा विदारिता
प्रक्षिप्ता धूलिशुष्कलालायाम् ।

भूकम्प-ज्वालामुखी-झञ्झाक्रान्ताः
कोणाः कोणा दिशो दिशः ।

शिरसि वेदना वाहोर्व्यथा
मृत्योश्छाया सञ्चरति
पथि पथि उल्कापाते
विमानसञ्चारे ।

तथापि क इमे
कीदृशा लोका
यत्र तत्र सर्वत्र
स्वर्णमुद्रां सौख्यकोषम्
आनन्दशान्तिसाम्राज्यम्
आह्लादाप्लावं
परिष्वजन्ति रिक्तौ रिक्तौ
स्वप्नानुवन्धे स्वप्नानृतहस्ताक्षरे ।

## ३५. स्फुलिङ्गा उन्मेषप्रतिबद्धाः

स्फुलिङ्गाः ! स्फुलिङ्गाः ! स्फुलिङ्गाः !
विस्फुरन्तो विस्फुरन्तो विस्फुरन्तः !
शाद्वलानि पश्यन्तु, मरुभूमयः पश्यन्तु
दीर्घापाङ्गा दिक् कुमारिकाः
स्वप्नानां षण्मातृका दशजनकाः पश्यन्तु ।
स्फुलिङ्गैः स्फुलिङ्गैः स्फुलिङ्गैः
विपुलानन्तनगगात्रं गगनं
विस्फोटितं रिक्ततामानीतं
त्विषाधनुष्टङ्कारः टङ्किता
नीलाभ उल्वणशक्तिप्रसरे ।

वक्रत्रुटिभिः सन्नद्धा साक्षात्
कालीस्वरूपिणी कालशक्तिधारिणी
सिंहासनशिखरासीना सौदामिनी ।
हंहो ! हंहो ! हंहो !
स्फुलिङ्गवेगेन स्फुलिङ्गमूकोल्का-रेखया
विदीर्णं ब्रह्माण्डवक्षः ।

तेषां दृष्टिरेखाङ्कने
प्रथमतः प्रकम्पितः शैलराजः,
ततः सकलकालावधिपर्यन्तं
सम्मूर्च्छितः सुषुप्तौ प्रक्षिप्तः ।

भो भो स्फुलिङ्गाः !
मन्योरग्निना वो भ्रूकुण्ठितः प्रभञ्जनः
अश्वत्थचरणे नमस्कर्तुं
बलान्नामितः,
अन्ते दुःशीलत्वात् क्षारतां नीतः ।
सत्यं ! सत्यं ! सत्यम् !

युष्माभिर्भूकम्पः
गर्जनशार्दूलविक्रीडितस्य विस्मार्य
शान्तिशिखरण्यां शिक्षितः,

अवाक् तूष्णीं कृतः,
मधुधारे मधुरप्रवाहित इतस्ततः ।

जानन्ति ग्रन्थान् सकला ग्रन्थयः
यद्धुताशनाक्षरैर्ज्वालामुखस्य
निर्माणप्रतिवेदनं प्रार्थना,
अमृताशा महाकाव्यानि विरचितानि ।

अवगच्छन्ति सकलानि लोचनानि
उपचक्षूंषि
यद्वः सन्तानैः
कुमारकुमारिकाभिः कुटुम्वैश्च
अत्र तत्र सर्वत्र
गतिसातत्यं सुनिश्चितं
सकलनीराजनानुवद्धम् ।
उत्कलापयित्वा युष्मान्
तक्यानलेसरप्रभृत्यभिधानैरन्वयैः
प्रमीयते समग्रायामहीनत्वं,
वलविस्फूर्जथुस्तथैव ।

न जाने कदा युष्माभिः
सर्वमुररीकर्तुं समादिष्टः कालः ।
कोणे कोणे भुवने भुवने
लोके लोके
पाताले पाताले
व्यापृतये व्याप्त्यर्थं
क्रियाकार्यवाहित्वेन
अध्यारोपितो देशः ।
इमे ! इमे ! अमी ! अमी !
सन्दोहसङ्घस्य भाषां
कुर्वाणा समग्रसत्तां मल्लयुद्धाय
खुरल्यामाह्वयन्ति !
तेषां साफल्यसृष्टिर्मल्लस्तम्भोऽपि ।

सर्वेषां हस्ताक्षरेषु
परिकरवद्धाः

त एव
परमाणुनवत्राण( न्यूट्रान )वमनिर्घोषं
सर्वाश्लेपिणीं
सर्वं लेलिहानां होलिकां
प्रह्लाद इव अवमर्दयन्ति ।

हे परमलघ्वीकृताः !
केवलं सत्तावबोधकाः !
नूनं यूयं ज्योतिष्कस्वरूपेण
शश्वज्जीवितुम् अर्हथ,
जीविष्यथ एव,
युष्माभिर्विनिश्चता
ब्रह्माण्डस्य सकलोपाधेः
दुर्धर्षाभिधानारावनिस्वनतायाः परिभाषा
चमत्कृतिस्तथैव ।

अयि हिमाङ्गाः !
वैश्वानराङ्गाः
एषा वः कीर्तिः, एषा वः कीर्तिः
अक्षुण्णा ! अक्षुण्णा ! अक्षुण्णा !
एतयाङ्कसंसृत्या
आत्मजयेनात्मसंस्कारेण
आत्मस्थिरत्वेन, स्थितप्रज्ञया
दृश्यादृश्याणां
सर्वेषां सहर्षं भारवहनं कुर्वन्तु
सकलं माङ्गल्यं वितन्वन्तु
क्षणे क्षणे कणे कणे ।

## ३६. उपसंह्रियते विश्वमातृकया

शान्तिचेष्टका हि शान्तधावकाः
शान्ततारकास्तु शान्तिभासका
शान्तिवेश एष देववर्त्मनः
शान्तिरश्मियूथसूर्य ईरणः ।। १ ।।

शान्तिदूत एष खलु सुधाकरः,
शान्तिशक्तिभिश्च यम्यते नभः,
धूमकेतुरपि च शान्तिशब्दकः
शान्तिगीतकार एष गत्वरः ।। २ ।।

अस्ति शान्तिवर्मनी हि योल्कुशी,
दीर्घशान्तिवर्त्मगापि वसुमती
शान्तिवादशान्तिमतसमर्थकाः
भूर्भुवः स्व ओन्तु शान्तिगायकाः ।। ३ ।।

सर्वसंसृतिश्च वक्ति साम्प्रतं
सत्यमेव नित्यजनगणितनुतम्
न्याय एष यो हि मत्ससंज्ञकः
प्रत्नरिक्तनाशकरणभर्त्सितः ।। ४ ।।

भोजनं हि वस्त्रवासयुक्तकं
दत्त मानवेभ्य इत्युदाहृतम् ।
विश्वशान्तिशान्तभृङ्गगुञ्जितम्
व्योमधरालोकभिश्च शिञ्जितम् ।। ५ ।।

अर्जनं हि सर्वमानवैश्च यत्
स्याद्धि योग्यतानुरूपकं नु तत् ।
यस्य यच्च जीवनहृदयेक्षितम्
स्यात्तु तस्य तद्धि हृष्टकरगतम् ।। ६ ।।

## ३७. नेदानीन्तन समयः

नीराजनसुरभयः !
पत्रोत्सुक्यानि !
विटपबाहुविपुलत्वानि !
परिच्छायाः !
किशलयानामुत्कण्ठाः !
वीजतर्ककल्पनापुनर्निवेशाः !
आमूलचूलस्वप्नाः
आशीर्वादाञ्जलिसंवलितक्षितिजानां
मरकतमूकदिक्साम्मुख्यानि !
नेदानीन्तन समयः शेषः !

मा वपन्तु शब्दस्फुरणम्,
जालप्रतिबद्धान् उपदेशान् !
नूत्नान् कर्णपरम्परया संवर्धितान्
ज्याघोषान् हिमालयरवान्,
जीवनविस्फूर्जथुभिराहूताः
सप्तवर्णवचनप्रतिज्ञाकुण्डलीः !

उच्छ्वासाः ! उन्मीलितनेत्राणि !
विकचा दृष्टयः !
नीलमौग्ध्यखचितलक्ष्मणरेखातिक्रमणाः
उन्मेषप्रवणा मनीषाः !
वपतु कर्माणि, कर्तृत्वानि
मौनाङ्कुरितान् प्रयासान्
आदर्शकिरणस्मितान्
साकारप्रत्यूषसमयान् ।
तेषां साकारशस्यप्रसरान्
सकलान् कलमसन्दोहान् ।

लुनन्तु नूतनाधिष्ठिताः
दिक्कुमारकुमारिकातरुणतरण्यः
यत्नघटिकादिवसकालमानै रक्तसञ्चरणैः

गतिप्रवणव्यञ्जनैः
प्रवुद्धा अवदातसमयसुवनाः
काननप्रत्याशाहरणाय,
मरुभूमेः पुनर्जीविताय,
स्थाने स्थाने रिक्तौ रिक्तौ
सर्वेषां माङ्गल्यसवनाय
व्यपदेशमूढाय लोकसंग्रहाय ।

# ३८. अश्वत्थस्य परिदेवना

वराकोऽयमश्वत्थो रोदिति
साश्रुं निवाष्पमपि
शब्दायिते स्वरविग्रहेऽपि
श्वाससमीरैः वेपमानः ।

तस्याङ्गरक्षायाः
कक्षसम्पुटे आसन्
स्वर्णमुद्राङ्कितानि
कुङ्कुमतिलकानि प्रभातानि,
वावहूकाः दुर्धर्षोत्साहसम्पन्नाः
भीमभीमकाया मध्याह्नाः
अनन्तचमत्कारकोषाः ।

आह ! कक्षकर्त्तकैः
कृन्ताः तस्य कक्षाः,
विषण्णमानसः सन्तप्ताननः
सकलद्विजानां संश्रयः,

प्रश्रयः पान्थानां, स्वीयनिःशुल्कपान्थशालाया
शीतलसान्त्वनां सौख्यं वितरन्
स हि अधुना बुद्धत्वकिरीटः
रात्रिन्दिवं सम्पुटके सम्पुटके
अमावस्यातिमिरभारमावहति,
आवोढुं विवशीकृतः ।

नक्तर्चः प्रसृता प्रसरिता उपन्यस्ता
महाशून्ये किं तम्
कैः सहान्विष्यन्ति ।

## ३९. सुपरिचितमपि तिरोहितं सिंहं प्रति !

कुतः ? पान्थशालातः ? निष्क्रामतु !
सिंह ! विदारयतु ! कठोरनरकतवक्षः
उद्धतस्याहम्मन्यस्य नीलतुन्दस्य—
रक्ताधानाय रक्ताहरणाय
उल्बणाय यज्ञभुजो जिह्वां वाणीं प्रदानाय
विश्वस्य रक्तप्रापणाय
वेदनापसारणाय
प्रत्यूपस्वागताय ।
उपहन्तु गर्जनतर्जनसमन्वितम्
आयामादनवच्छिन्नं
विध्वंसोपप्लवकारकं क्रोधं,
प्रशान्तपारदर्श्यादर्शवत्
वातावरणस्य रूपान्तरणाय
उल्लसतु, नृत्यतु ताण्डवलास्यं
दिक्कम्पि-भूकम्पि-प्रलयाय
नवसर्जनाय तूलनिर्माणाय !
सिंह ! सिंह ! सिंह ! नरसिंह !
श्वासस्य 'सोऽहं' स्वराः
त्वामाह्वयन्ति ।

## ४०. न खल्वाख्याहि भद्रे ! कस्यचिदन्यस्य पाषाणस्य

अस्मिन्नुमत्तप्रसरे
यत्र देशस्य चत्वार: परिचरा:
यातायातनियमनाय
स्वहस्तान् दर्शयन्ति,
पाषाणोऽयम्, आम्, पाषाणोऽयम् ।

स हि हसति
आलोकाभिधधूर्तस्य
स्वस्ति-वाचने सूक्तिपाठे ।

काञ्चनमृगास्फालस्तत्प्रवञ्चक:
तं पाषाणं गणितादिकम्
वर्णमालाम्, अन्यद् बहु
पाठयति शिक्षयति ।

तं पाषाणं घनतिमिरो नाम कश्चित्
जन्मान्धयायावरो विपञ्चीवादको
वणिग् वा वैद्यो वा
उपसर्पति, तस्य वक्षसि
शाद्वलान्याह्वयति, वप्तुं प्रयतते ।

तत: परं स्वभोगबन्धकपत्रं
निष्कासयति, तत्र तं पाषाणम्
बलवशं हस्ताक्षराणि दातुं
विवशीकरोति ।

पाषाणो वातायनाद्बहिर्गत्वा
आलोडितविलोडित:
यौवनमुग्धां चन्द्रिकां
तस्या: समग्रपरिवेशं
सुरभेरनामिकागीतिं च
स्वप्रशस्तवक्षसि
आत्मनोऽचेतने आत्मसात्कर्तुम्
सम्भर्तुमभिलषति ।

तस्य विन्दौ विन्दौ सिन्धोरुद्वेलने
न जाने के के तं प्रताडयन्ति, ताडयन्ति ।
जगतः प्रतिक्रिये ! सुपुप्ते ! प्रवोध ! संस्पर्श !
परिचीयते युष्माभिः
पाषाणोऽतिथिः !
वृक्षो वृक्षः कोटिजिह्वं प्रश्नचिह्नम् !

कण्टकिते शर्करिले पथि
विश्रान्तेरतिशय्याद्
उत्तराणि उपरतानि !
किमनृतमेतत् ?

कालस्य प्राङ्गणे
न हि जलागमस्य मनागपीङ्गणम्
समीरगर्भगृहे प्रकोष्ठे वा
न हि कादम्बिनी समासादिता,
कथं पुनः कुतो विस्फूर्जथुरेषः
एतस्य सर्वस्य साक्ष्यमावहति ?

## ४१. द्वितीयसमुद्रमन्थनम्

सिन्धुमन्थन एष लब्धः सारवत्खलु नूतनसूर्यः ।
नूत्नयुगमुनिना वरेण द्वित्वमन्थनतत्परेण ।।

शुभ्रभासे तस्य दृष्टम्
अर्थरत्नत्रयमनुगुणम्
मृत्तिकायां खलु धरायाः
सृष्टिमज्जनसागरेण ।

पूर्णमानव एष आदर्शकलमूर्तेः कृत्स्नविवृतिः ।
देवताया अर्थ एषः ज्ञेयपूर्णादर्शतोषः ।।

सृष्टितक्रं स्वनति च पुनः
जगनियतिसर्वार्थवाची
ईश्वरार्थः शब्दरहितः
अन्तहीनादर्शकोषः ।

# ४२. त्रिपाश्र्वम्

संकेत:—

शवमितिहासस्य ह्य:पर्यन्तस्य
स्वस्कन्धे आदधानो
वैतालदेहं विक्रमार्क इव
भूगोलश्चरति ग्रहनक्षत्रवेगै:
घस्मरार्थशास्त्रं तस्यान्त्येष्टे:
कुचाणक्य-सन्निभं
नाणकचलावनीमयं व्ययमाकलयति ।

निकेत:—

सौधे स्वर्णकुट्टिमे
हीरकोच्छ्राये साहित्यं
हर्षातिरेके आत्मविस्मृतौ
आह्लादमदनं निजशिर:
संवेपयन् तौर्यत्रिके
सङ्गीते प्रवृत्तम् ।

प्रकेत:—

आरामेषु
आलवालेषु पुष्पहसिते
देवानामाशीर्वादोन्मीलनं-
रवे: शुभाशंसनवर्षणं
सामुद्रिकं वाचयति
अधीते वैषम्यमेतत् ।

## ४३. खस्वस्तिक आमन्त्रयति सप्तमे आकाशे

गीतं गायति धमनी
शिरानुगुञ्जति,
शम्पा-हृदयं
श्वासे मधु सिञ्चति ।

क्वणिता कविता
रणिता सत्ता,
मानसं स्फुरति
हसतीयत्ता ।

अवकाशः सर्वः
शून्योऽप्यवदातः,
मांसलवातः
पेशलजातः ।

नीलं वादयते
जोपं वेणुम्,
मसृणं वपति
तारकरेणुम् ।

व्योमवल्लरी
व्यालोडितकवरी,
हस्तामलकी
रस उडुनगरी ।

## ४४. आत्मोपलब्धिः

जडतानिगडितं पाषाणमानीय
मूर्तिकारः समाधिमौनेन माति सर्वम्
अश्लक्ष्णप्रसारं स्पृशति वै,
तस्यान्तरतमे सन्तरन्
विमृशति तथा ।

नन्दनवनमारुह्य
नक्षत्रताराभिः सह संलपति ।
तडिदचलायतनस्य कक्षे कक्षे
ज्योतिषि दुर्लालयति
परामृशति च ।

घाते प्रतिघाते च प्रस्तरीभूतमांसपिण्डे
आराध्याधिदेवतामुत्कीर्य परमाह्लादितः ।
लौहोपकरणैः प्राणप्रतिष्ठापरैः
स खलु तत्रात्मानं समुपलब्धवान् ।
प्रातिभमनीषे । किं परिचिनोति

ह्येषा स्वोपलब्धिः ।
ततः परं प्रमातृप्रमेयप्रमाणान्वेषणस्य
पुष्पोन्मीलनस्य का मूर्ध्नि स्थितिः ?

## ४५. कचहरी

अभ्रंलिह-सौधविभूषिता
तडिच्चालक-तिर्यक्त्रिपुण्डमण्डिता
कालाचार-कृष्णवस्त्रविरामिता
चतुर्दिक् कालज्योतिश्रमचमायिता
उत्कोचखेलोत्कोचहेलोत्कोचप्राणोत्कोचसिद्धिः,

बाबुवण्डाबाबुपण्डाबाराङ्गनेव बावदूका
कोटिजिह्वा कोर्टसंज्ञा
अभिलेखदुर्गे मर्मास्थिता ।

जलौका इव हस्तं धरति,
पादं धरति, मस्तं धरति,
वस्त्रं हरति, वासं हरति,
वाचं हरति, क्षेत्रं हरति,
क्षेत्रज्ञं हरति, वक्त्रं हरति,
गोत्रं हरति, गात्रं हरति ।

वाक्कीलरूपबहुरुद्रस्रष्टृविष्णुनुता
सर्वाङ्गे जजचन्दनर्चचिता
सर्वान्ते साहसिका जगमखहरी
कचमपि हरतीति कचहरी ।

## ४६. परिरभ्य कानिचिद्धस्ताक्षराणि

( त्रिताले यमनरागे )

व्याकुलझञ्झे ! दर्पणतीरे,
विरमतटाके वीचिजले त्वं गीतगवेषणघनवानीरे,
उच्छ्वासः पांसुव्यापारो दमनीयः पथि हृदयसमीरे,
केवलसंयमकर्षो वेणुं किल वादयते प्राणकुटीरे,
त्वां विहसति विकिरणसन्दर्भः सीमान्ते नीलप्राचीरे
'रिम्झिम् रिम्झिम' गायति चपला क्षिप्त्वोग्रत्वं रवितूणीरे,
आयसघर्षे शिला 'शिवो' वै भवति च शान्तेः श्लक्ष्णे चीरे,
सक्षिप्ते वाग्मित्वे शून्यस्फीतिः शिङ्क्ते तनुमञ्जीरे
सूर्याग्नि चन्द्रसुधां कृत्वा गतवति तापे लिप्त उशीरे
प्रालेयकरैवितर शिरीषं खलु कौशेये रागे धीरे,
व्याकुलझञ्झे ! दर्पणतीरे ।

## ४७. क इमे सम्बुद्धौ

सन्धेः सामञ्जस्य प्रसरे ?
भित्ते ! दूरे त्वं कुरु गमनम्,
पथि न हि स्यात्ते शयनम्,
न च जागरणम् ।

तर्जनीसमीपे यदि ते च महत्वाकाङ्क्षा
वज त्वं झञ्झा-
श्वाससकाशम् ।

बाहुगणानां सङ्कलनं
सन्धानविधाने
इच्छन्ति महासौधसुखदनिर्माणम् ।

किरणं किरणम्
धरणीगगनप्लवनम् ।

मर्यादे ! किं ते खल्वभिधानम् ?
भणितं ते
बहुवर्णशवलदृष्टिप्रमाणम् !

कृत्वा ते मधुमयसङ्घटनम्
भुजयूथास्ते
इच्छन्ति महाशून्ये
करवालसदृशविततेन्द्रायुध-वरणम् ।

संख्यातीताः सन्ति कियन्तः
सीमाबन्धाः ?

तेषां पक्षैः पक्षै-
रायामविहीना तारादुर्लंलिता
उत्तुङ्गाह्वाने क्रियते मरकतशोभा ।
अन्तरालविस्तारे दण्डैर्दण्डैः
क्रियते विपुलं दीर्घं सोपानम्
किं क्षितिजं क्षितिजम् ?
खल्वेतद् बाधायाः वलयितदर्पः

अक्षुण्णनिगडिता
प्रश्नोत्तरदीर्घमेखला ।

इदानीन्तनाभिलाषा यूयं
भवत हि धीराः,
श्वो भविता विततललाटे
दिनकरविरचितकुङ्कुमतिलकम्
अमृतांशुसमेधित-चन्दन-पादाकुलम् ।
एतत्सर्वं जीवितसन्धिः
एतत्खल्वालोकतिमिरगतिसामञ्जस्यम् ।
गन्तव्याहूतं
निस्वनमुखरवेगनिरालस्यम् !

## ४८. नैशनियतिः

गद्यवत् निशा,
यन्त्रवत् तारकविशा ।

प्रयाणस्तब्धैः
क्षमापरिरब्धैः
अस्मितारुद्धैः
शून्यप्रवुद्धैः
पूर्वजन्मगन्धैः
सत्तास्वीकरणैः
स्मृतिस्निग्धकिरणैः ।

धृतिप्रेङ्खिताः स्वप्नाः,
आश्लेषविकलाः प्रश्नाः ।

सुषुप्तिनिमीलितदर्पणः
जडितत्विषासमर्पणः
प्रतिविम्बतृषातर्पणः
विन्दुविन्दुविकासकर्षणः ।

श्वसिति यूथिकासत्ता
वीणातन्तुगतेयत्ता ।

शान्तिस्तन्मात्रमत्ता ।

मौनं वादयते स्वहृदये वंशीम्
मानसे तर्कानुमानशंसीम् ।

कुसुमदले नीहारेऽमले
सुरभिसमाधिः
विरहिताभिधानोपाधिः
अतीन्द्रियं निर्वीजत्वं वयति,
संवेदनाङ्के मामकीने स्वपति ।

सलिलात्मिको मूकः पवनः
विद्युच्चुम्बकत्वं किरति पेशलनिवेदनः ।

क्षणिका परिभाषिततुष्टिः
अन्विष्यते कथमनन्तकालवृष्टिः

अनन्तग्रन्थिग्रन्थसमाहितासृष्टिः
कुत्र, कथं, कीदृशी कृत्स्न-न्यष्टिः ?
मसृणायाः शैलोपत्यकायाः
कण्टकितायाः समरसायाः
सुखदालोडनायाः
वेदनाविलोडनायाः
समग्रपरिसरायाः
पाषाणविग्रहायाः
विद्युद्वत् काचकूपे उद्वेलितायाः
अज्ञातगतिदोषायाः
मधुरकषायितषड्रसनियतिः
भाग्यं छित्वा दिष्टचा विधृतिः ।
कोणे कोणे उप्तप्रसृतिः
मूले चूले श्रेयःप्रेयस्रागप्रणतिः ।
खस्वस्तिकगङ्गे मा कदापि
रुन्धि प्रच्छन्नस्य सूर्यस्य सन्तरणम्,
आमुष्मिकवीथिकायाम्
अभिरामधरणीधमनीपरिचालितस्य
कोरकमुकुलसन्धानितस्य
प्रहर्षाप्रहर्षवेगावेगसन्दानितस्य
निमिषानीतपुष्पकविमानस्योड्डयनम्
समन्ताद् दुग्धसीहुण्डरसालशाखासु
अजस्रविजृम्भितजिजीविषाचयनम् ।

## ४९. रूपपरिनिष्ठा

आयामोन्मीलनप्रसरे
प्रतिवद्धतापुष्पिताजिरे
किरणानामालोडितहस्ताक्षरे
सुरभितरुणसंवेदनहासविलासः
जीवनमयामृताशः
शाखाहस्ते पल्लवजिह्वासु
तृणगुल्मविटपमूले
दृश्यादृश्ये सकले चूले
स्फुरति स्फुरति किमुत पृच्छति क्षणे क्षणे

केयं नारी जगतः प्रकृतिः
कारयित्री भावयित्री लालसा
कवयित्री क्षमाधृतिः ?
दिनमणिकुङ्कुमः पवनः
वदति च सन्दिशति च हृदये मस्तिष्के
दिवसे विपुलोत्वण-मधुरकषायितभासे
इयमेषा जीवनसङ्गिनी,
सङ्घर्षसहचरी
अर्धनारीश्वरपूजा
सत्ता खल्वर्धाङ्गिनी
सञ्जीवनी प्रेरणा, शक्तिः समवेदना
कल्याणी प्राणेश्वरी
देवी, रूपमती, शीलवती !
आवेदितमहिमा
उत्साहोल्लासप्रतिमा
पत्नीसंवर्धितगरिमा ।

सा खलु क्षणदारजनीप्रहरे
सुरभिगीतिलयविकरे
ब्रह्मानन्दानुवादमुखरे
स्पर्शस्वनवंशीसुषिरे

आत्मनिलयसुतीर्थे तारे
शय्याद्वितया
मधुरंमधुरा
जीवनस्पन्दनानुरागद्वितीया
रसपेशलमसृणकुशेशया
मुकुलितविकसितस्वप्ना
परिमलमधुपरिप्रश्ना ।

परिरम्भविहायसि चन्द्रिका
विबुधालयसरणि शिञ्जिका
एषा रूपस्य रूपोत्कर्षस्य परिनिष्ठा
एकस्मिन् द्वितीया मर्यादाप्रथिष्ठा
पुष्पे सर्गबन्धे वज्रस्य प्राणप्रतिष्ठा ।

एतत् ग्रन्थे चिह्नमिदं सत्यम्
अन्या भूमिका पुष्पिका मिथ्या
एषा तर्कानुमानानुप्राणितसृष्टि:
एतदुद्घोषयति सार्वत्रिकदेवतारथ्या ।

## ५०. विजयते राजिका

शिखरकेतना नगा ! मुग्धमतय उच्छ्रायेणोत्सेकिनी
गगनविलेखने मार्तण्डमविगणय्य
स्वमञ्जूषाधृतैः रत्नैर्व्योमगाङ्गेयैश्च
श्रीमन्तो लक्ष्मीप्रमत्ताः ।

दरीदृश्यते भवतां बलातिशयो व्याधिः
नितरां निरामयत्वमामयत्वम् ।
अग्रे विपुलाः
पृष्ठे पृथुलाः
ऊर्ध्वं भीमा
निम्नमसीमाः
कथमेषा भवतामुपत्यकाना-
मधित्यकानां तिरस्क्रिया ।
रुदन्ति स्नेहः
तटिनीरवेदः
मर्माहतस्तुतयः
खिन्ना सृतयः ।
प्रताडितास्ताडिताश्च शिलाखण्डा
अवमानिता अवमर्दिताः
सकलप्रतिवेशिसमाजाः ।
भवन्तः स्निह्यन्ति स्वशरीरे सत्त्वे
स्वतायां, निजे, निजत्वे, परिवारे च ।
अश्मव्यष्टिरुपेक्षितो
ग्रावसमष्टिरुपेक्षितः
हिमानी हिमस्रवश्च
हिमीकुरुतः सर्वं सर्वत्र ।
अवलांशप्रक्षेपे क्रोड़े क्रोड़े दुःखार्ता तरुराजिः
कोणे कोणे दुःखार्ता वल्लरीजातिः ।
हंहो ! वास्तवपरिणाहे
विशालतमो स्वसात्करोति

ह्रस्वतमं महदाश्चर्यम्
मर्मंतुदमेतत् ।
शैला निजभीमाकारम्
अतुलितवैभवपरिहाणं
राजिकां कुर्वन्ति ।
राजते राजिका रामणीयकम्
विजयते कालविपर्यये
गुञ्जार्धमानम् ।

## ५१. सार्थः

उन्नायकेन सह
कस्मिश्चिन्नगरोद्देशे
पुष्कलपण्यलक्ष्मीसनाथा
बहवो वणिजः सम्प्राप्ताः ।
उन्नायकादृते सीमाशुल्काध्ययेऽगणयत्
'एकः, द्वौ, त्रयः चत्वारः, पञ्च···'
तत्रान्तरे तमेवोन्नायकमनुसरत्
तमेव मन्यमानम्
अन्यद्वणिङ्मण्डलं समासादितम् ।
तथैव राजपुरुषेण गणना कृता
'एकः ··············· पञ्च ।'
विपणिमध्ये न कृत्स्नं न सम्यक्
कृतः सहयोगो मिथस्तैः ।
ते स्वैरिण उन्नायकमप्यवामन्यन्त ।
कालेनाल्पेन नैवेतस्ततः परिभ्रमन्तः
परस्परं छलयन्तः स्वजनैरेव
प्रवञ्चिताः ।
इत्थं परिणमति रङ्गः
यवनिकापूर्वं किल सार्थभङ्गः ।

## ५२. अनुत्तरितमुत्तरम्

फुल्लप्रसूनबन्धः
कौशेयकिरणसन्धः,
स्मितमधुरसेकगीतम्
ज्योत्स्थाप्रणवसुनीथम् ॥ १ ॥

किमिदं कणेषु घटितम्
नवनीतमिव हि मथितम् ।
संज्ञा तु तस्य 'बालः'
शिशुरेष रूपमालः ॥ २ ॥

कस्तं नवान्तु प्रश्नान्
पृच्छति किरीटरत्नान्
स्वगतं विनोत्तरमिव
मधुरः समाधिविरवः ॥ ३ ॥

उत्तरमशब्दसर्वम्
अमुखरमज्ञातममृतम्
किञ्जल्कस्पर्शमसृणम्
तृप्यति हृदयमखिलम् ॥ ४ ॥

स्वप्नः स्मितेषु फलति
अधरपुटमावृतमपि
अन्तर्ह्यनावृतमुखम्
शीघ्रं करोति च सुखम् ॥ ५ ॥

सम्भाषणं हि शिशुना
एतत्सहेश्वरेण
उत्तरमिहाददाति
गणितं तु यस्य नास्ति ॥ ६ ॥

## ५३. निषिध्यति वंशी

वंशिकारन्ध्राणि नुदति कश्चिद्
रागपरिप्लुताधरपल्लवे वक्तुमारभेते ।
उन्मादनस्वरलहरी
तारा नक्षत्राणि पीत्वा
किं जानेऽकाल एव
प्रभातमानीतवती ।
सूक्ष्मीकृता धरणी
कस्मिन् रन्ध्रे न जाने
गोपिता खल्वसरणी ।

स्वप्नाः संस्पृश्य संस्पृश्य
जागरयन्ति मुग्धां सुषुप्तिम्,
अद्भुतामिमां शाययन्ति कुमारीं
वाग्दत्ताजागर्तिम् ।
स्मारं स्मारं विस्मारयत्यारोहो
नेत्रोन्मीलननिमीनयोरुपचयापचौ
इतस्ततोऽन्ततोगत्वा ।

सम्मोहने कृत्स्नं निषिध्यति वंशी
मा स्मर नेयं काशी,
नायं च प्रयागः
न च कन्याकुमारी,
न च कामरूपः,
न च रामसान्निध्ये लक्ष्मणपुरी,
न सागरपर्यन्ते द्वारकापुरी,
न च 'मधुराधिपतेरखिलं मधुरम्'
इति गुञ्जितमथुरा ।
विस्मृतिपथप्रयातं सर्वं,

पुनरपि सैव निषिध्यति वंशी
मा स्मर ! मा स्मर !
कस्त्वं, कोऽहं, कः स च
कुत्रत्वं, कुत्राहं कुत्र च सः ।

पुनरपि सैव निषिध्यति स्वप्नम्,
सैव निषिध्यति जागरसकलम्,
सैव निषिध्यति निमिषं निमिषम्
मधुरसुपुप्त्याम् ।
अद्भुता सेयम्
अपरिशीलनप्रसरा गीतसुधावंशी
ध्रुवस्य पुष्पिका-तर्जनी
सच्चित्सुखं पुष्कलं
न खलूच्छ्वासे निःश्वासेऽपि वर्षिणी ।

## ५४. उपचक्षुः

सख्यो वाधा अन्धतां प्रयाताः,
मन्थमुक्ताविन्दुभिराक्रान्ताः ।
ताभिः सहचरीभिः स्वर्णपात्रे
दिवसतः उद्धृते,
कालायसभाजने निशातः
उद्धारे प्राप्ते,
शिशिरस्य चन्द्रिकासंयोगे
तारकौषधिसन्निवेशे
कश्चिदद्भुतः क्वाथो निर्मितः ।
आतुरालये रुग्णभिः सूर्यस्य कलधौतेषु
सुधाकरस्य रजच्चपकेषु पीतपीतः ।
ततः परं कण्टकीकृताञ्जनमञ्जितम्
उपचारान्ते उपचक्षूंपि
अपि क्रीतानि धारितानि ।
तस्मात् क्षणात् एताभिर्बाधाभिर्यवनकाभिः
स्वैरिणीभिः
दानवाश्च मानवाश्च
पृथक्-पृथग् यौगपद्ये च प्रत्यभिज्ञाताः ।

## ५५. निपत्या

तडित्प्रपायां
मरीचिप्रपायां
प्रवञ्चिते नेत्राभ्यां
श्रवणे सञ्जाते
अरातिपक्षधरे
पैशुन्यं कुरुतः क्षणे क्षणे ।

सुरभिवहित्रे
श्वासदुरभिसन्धौ
अतलान्तके
निमज्जितं घ्राणम् ।

रसना व्यसना
कृतं तया गरलामृतध्यानम् ।
करकन्दलैर्न कृतम्
उषीरज्वालास्पर्शोन्मानम् ।

प्राप्तः पिच्छिलप्रसरः
असम्यक् परिव्रजनम्,
परीक्षात्यजनम्,
आरोप्य शिरसि चरणयुगलं
कर्मणो राजपथं विमलम्;
संलक्ष्य, सम्प्रति धावतु, प्रव्रजतु
कृत्वा प्रज्ञापूतं सकलम् ।

## ५६. पुष्पस्य रूपविद्युत्

पाटलदलतडिदुन्मेषः
कथमथ कथयपि 'नीरवसौम्यविकासः'
इति मुग्धपदावलीम् ।
प्रकृतमस्मितं स्मितमिव प्रतिभाति ।

स्पृशति तडितः कौशेयमसृणता,
दूरात् परिशीलति स्फुरत् किरणकुमारी,
उत्पतति पुनरुत्पतति लोचनवासः
हसन्ति हसन्ति भृशं चाक्षीणि

उद्वेल्लति रक्ताशोको विग्रहकरणे
व्यथते स्मेराननहृदयम् ।
त्वक् चैव प्रहर्ष-संवेदन-संसृत्या
सुखार्धस्फुटत्वेन
समानच्छायभावेन
अनामवर्त्मनि परिदह्यते ।
न तत्र विद्युत्तन्तू द्वावपि ।

स्पन्दनकलितं वातावरणम् ।
व्याधिश्च भवति प्रभवति
करोति निरामयं मधुक्षुरितपवनपारितस्वप्नम् ।
दूराच्चाक्षुणसंस्पर्शः
शल्यारोपणमेतत्
कथमथ भवति च प्रभवति
सञ्जीवनवनीतविलेपः ।

धावति वृत्तमनोज्ञा
शफरी अवस्यायश्लक्ष्णा,
ध्वनति च ध्वनति सदा
सद्यः कुसुमितप्रस्रवणस्तनयित्नोर्वीणा ।

व्यवधाना वादनकुशलाः
विस्मितरूपविभासहायाः

ह्रस्वोऽप्येष शून्यसुधायाः
अन्तरात्नांशः साकारः कोणः
तदपि च खल्वेषा वीणा
कथमथ मूर्च्छितमीडा ?

पाटलदलमधुरविकासः
तडितो मादनविकचप्रकाशः
वयस्कावयस्को न भासः
विह्वलयति नितरां च विकलयति
चक्षूरागो नन्वभिधानसमेतः
अभिधेयविरहितः
कुसुमायुधप्राणप्रणयनिकेतः ।

## ५७. पूर्णता

अथ किं, महसां सश्रया
राकाया ज्योत्स्नेव पूर्णा
उषाया अरुणिम्न इव प्रत्यग्रा
लोकोत्तरानन्द इव
अद्भुतसुस्वादुमधुरा खलु
ओ स्वप्नपूर्णते ! न कापि विचिकित्सा,
मा कुरु करकन्दलजमप्यभिषेकं
नेत्रापाङ्गेन च पीयूषविकिरणैः
संस्पर्शानुशीलनम् ।

न परिकल्प्यते इयत्ताहीनतया
यत् संयंत्रस्यादर्शस्य हृदयमसंवरणीयतया
तव परिच्छायया सह धाविष्यति
सावयवी शरीरं च
अनामरिक्तां परमाणुक्षरितां
क्षारतां यास्यति !

## ५८. अमृतप्रयासाः

शस्त्राणि शास्त्राणि पाठयन्तो
जीवनस्फुरितनाडीस्पन्दनप्राणप्रयासाः !
यूयं वास्तवं नक्षत्राणां सङ्कुलनादपि
महत्तराः
शक्तेरादर्शानां, सुखानां
संयानं चारुतराः ।

नेत्रेषु प्रतिबिम्बिता यच्चत्वारो वृन्दगायकाः
स्वप्नेषु उत्तरन्तस्ततोऽधिका
मृत्तिकादीपाः
तेषु, तेषां लक्ष्ये
आकाङ्क्षासु
आलोकक्रियाकलापेषु
वोमहती अभिरुचिः ।

तेषु स्नेहं वण्टयत, स्थापयत च,
श्वेतावदातसमन्वयसमवायबद्धानि
सूत्राणि प्रबुद्धानि कुरुत ।

सूर्यस्य जनप्रतिनिधयो भूत्वा
दारिद्रय-दुःखान्धकाराग्रे
अभियानं कुरुत ।
कृत्स्नधरणी-समग्रगगन-
सम्पूर्णान्तरालेभ्योऽमृतस्य
सन्धानं कुरुत !
जिजीविषत ! जीवत ! जीवापयत !

## ५९. कृत्रिमगीतम्

कृत्रिममेतत् स्मितकरणम्,
एतत्खलु कृत्रिमहसितम्,
एतन्ननु कृत्रिमगीतम्,
आर्द्रमपि च कृत्रिमरुदितम् ॥ १ ॥

कृत्रिममपि पश्यत्वङ्गम्,
शङ्का किं कृत्रिमहृदयम्,
गर्वोद्धतकृत्रिमवृक्कः,
चेतति कृत्रिमचैतन्यम् ॥ २ ॥

किमु कृत्रिममानव एषः !
कृत्रिममप्याशीर्वचनम् ।
प्रणतिर्ननु कृत्रिमशेषा,
कृत्रिममपि नारीरत्नम् ॥ ३ ॥

कृत्रिममानव एष च रे !
प्राप्तो ग्रहनक्षत्रतले ।
पदे पदे कृत्रिमशीलः
विलसति विहसति भूमितले ॥ ४ ॥

अभिनन्दितकृत्रिमनयनैः
बहुकृत्रिममप्यातिथ्यम् ।
पश्यतु खलु कृत्रिमरात्रौ
किं कृत्रिमदिवसास्तिक्यम् ॥ ५ ॥

कृत्रिमसर्पिष्, कृत्रिमतैलं,
कृत्रिमवस्त्रं कृत्रिमशस्यम्,
कृत्रिमनाणककृत्रिमस्वर्णम्,
कृत्रिमजायुः कृत्रिमखाद्यम् ॥ ६ ॥

कृत्रिमसन्ततिमिह जनयन्तम्
भज रे भज कृत्रिमभगवन्तम्
बुद्ध्यतु कृत्रिमयुग आयातः
दिशि दिशि कृत्रिमजीवनवातः ॥ ७ ॥

## ६०. शब्दायमाना उदुम्बरपुष्पसुरभिः

मनसो रागिन्यः !
मनसः कविते मधुरे वाग्मिनि !
मनसो घनघोरनिराशे !
कान्तारेऽवरुद्धो निःश्वासो

मृग्यति कियता कालेन
दिशि दिशि किञ्चिदालम्बनमेकम् ।
न कलिकाया अधरम्
समासादयति परिच्छायापि !
अम्बुवाहैः सह उड्डीयते शाद्वलम्–
घनवामाश्लेषमुकुले स्मितं करोति ।
तत्रात्मनिलये तृणमपि
न शृणोति वचांसि
उद्वासितहृदयस्य ।

विस्मृतेः सहकाराणां शाखायां
वैकल्यस्यपिकः पुनः पुनरपि
निगदति च प्रणयोदन्तम् ।

पाषाणोऽपि भीमोपप्लवे
प्रवाहविलुप्तः ।
कुसुमविकासरथश्चापि सुपुप्तः ।
यत्रत्यमसर्वत्रान्विष्यति
किञ्चिदालम्बनमेकं
जीवितत्वाय नन्वमृतत्वाय तथा ।

शब्दायमाना
उदुम्बरसुरभिर्वाङ्मयी
प्रतिध्वानयति पाषाणम् ।

## ६१. अवाचः स्वप्नाः

स्वप्नाः कण्टके स्थिताः
उल्वणोल्कायां ज्वालायां
सन्नद्धाः पदारोपिताः
सुधासागरे लवणोदधौ वा
विवर्त-रज्वा निगडिताः
लालसां परिणेतुं सुपुष्टाधारं
विचिन्विन्तो बुदबुदायमानाः
निर्निमेषं चन्द्रं तारकावलीः
पश्यन्ति स्म ।

परन्तु साम्प्रतं यदा पञ्चत्वं गता प्रतीक्षा,
यदा कलहायमाना सम्मूर्च्छिताशा,
यदा साध्वसजातातिशयावसादा
सान्त्वनापि पलायिता,
स्वप्नैर्न सम्प्राप्तः पुष्टाधारः,
अवाचस्ते धूमज्योतयो धूमायन्ते
अन्तर्ज्वलन्ति,
तान् तुदन्ति शर्वरी
राका, दिवसायामः
पातालभैरवी रागिनी
अरुणस्पर्शरश्मीणां
पराङ्मुखी
रक्ताक्तकोमलकपोलपालीपलभा ।

## ६२. रजतपटे वा भूमौ वा

वचनवद्धत्वं सत्यानुपालनं तथा
आकर्षणानि नितरामुग्रान्तर्द्वन्द्वानि
उत्तालतरङ्गमालासङ्कुले महासमुद्रेऽक्षिपन्,
तत उड्डीयमानानि पर्वतोत्सङ्गे
शिखराद् दुर्घटनां कुर्वन्ति सर्वाणि
शिरोभ्रंशं, रक्तरञ्जित त्वं
विपत्तिश्च सञ्जनयन्ति
दूरदर्शने किं किं वै
कालसरणौ राजपथेष्वदर्शयन् ?—
किमिदं चित्रपटत्वम् ?
किमिदं यथातथ्यम् ?
किमिदं शैशवम् ?
किमिदं तारुण्यम् ?
किमिदं पौगण्डानुप्राणितम् ?
किमेतत् ततः परम् ?
एका यवनिका
द्वितीया यवनिका···
···तथैव कियत्संख्याका ?
किमन्ततः पटाक्षेपः ।
अत्र सुखं किं प्रलपति ?
तत्र दुःखं किमुपदिशति ?
किं निर्वचिते
उपन्यस्तमिदम् ?—
व्याकुलत्वं, जडत्वम्
बालिशत्वं, विचेष्टितत्वम्
परिणाहान्तहीनं विवरणम् ?
स्वस्ति ! स्वधा !
आम् ! नहि ! अथ किम् ?

## ६३. झञ्झायां निर्वातः

स्मृतीनां रथे गत्वरे
तित्तिलीनां चत्वरे
स्वप्नानामतिसङ्कुलतायाम्
अभिलाषाणां सज्जिताह्लादनिषद्या,
तत्र प्राणानां विनिमयो न सम्भवः सञ्जातः ।

उपवनसंयोगे पुष्पाणामभिसरणम्
तेषां लोहितसङ्क्रमणम्
चक्षूरागः समुदयन्ति स्म ।
अद्यत्वेऽपि नेत्राभिष्यन्दः पीडाकरणः,
जनयति शिशिरे वासन्तिकसम्पातम् ।
सुन्दरीसान्त्वनाचरणावताडनविच्छित्ति-
र्मूले, चूले च प्रसूते हृत्परिसरहिमपातम् ।
एषा वितथा गुञ्जति
एकतालीतालेऽष्टपदी गुर्जररागे ।
मृद्वीकाया रससम्भरणेनालम् ।

विस्फुटति
समीरसुपमायामनङ्गालापः
कनीनिका-स्फुलिङ्गं
समीरयति धमति च
ज्वालापुटपाकः ।

शकुनं नोच्चारयति
कालो रटन्नपि काकः
एकपदे दुर्घटनामायाति
प्रणयपरिपाकः
स्मृतिझञ्झायां निर्वातः ।
कोऽयं विपुलः ?
विवर्ते विकलः ?

## ६४. पथभ्रान्तिः

जिह्मा रथ्या
विषमा वृत्या
रम्भा च्छाया
काया माया
चत्वरविकलम्
आशासकलम् ।

सुहृदस्तरवः
कोटिकजिह्वाः
शतशो विवृता वार्ताः
तस्करध्वान्तम्
निगडितप्रान्तम् ।
सुषिरं गगनम्,
मिहिकाकरणम् ।
दिवसालोकः
गुहासशोकः
भयकरचपला
विषमयधवला ।

उभे च सन्ध्ये
नागविबन्धे
क्लान्तो बाहुः
यन्ता राहुः
श्रान्तं चरणम्,
न किमपि शरणम् ।

विघटितसार्थः
विजडितपार्थः
समीरश्चलति
अजगरः श्वसति
कण्टकवल्लरी
धूर्ता शर्वरी

प्रमदा पूर्णिमा ।
सङ्कुलज्वाला
पदवीशाला
सुमनः सुमनः
विषधरवमनम् ।

सकला कलना
शत्रुच्छलना ।
सत्यं कुरुते व्याजम् ।
अनृतं विकिरति लाजम् ।
कथमथ कुरुते गमनम् ?
पथभ्रान्तेः किं शमनम् ?

## ६५. एका काणा प्रार्थना

भीतभीताः शब्दा पलायिताः
शवशिविकाधिरूढा अर्था
वक्तुं न शक्नुवन्ति किञ्चित् ।

निवेदनानार्हा सुरभिस्वनता
कोटिपत्रजिह्वापि ।

अक्षिणी संवृते द्वारि
नादृष्टप्रयासा वाचयन्ति प्रकाशपत्रम् ।
मूर्धाश्रिताञ्जलिमावहन्तो
हस्ता न ध्वनन्ति हृदयं
परस्यापरस्य वा जाम्बूनदीये रविमन्दिरे ।

वसन्तोत्सवा धूलिवन्दनं
रचयन्ति जडत्वस्याभिशापस्य ।

एका काणा प्रार्थना
रवति कथं पाषाणचरणे—
आश्रित्य का सम्प्रेषणीयताम् ?
पङ्गुमुद्रा छायाचाक्षुषवक्तुं
प्रयोक्तुं कथमुत्सहते ?
कं नमन्ति स्वप्नस्तवनं—
जागर्तिप्लवनं—

## ६६. प्रणयायामाः

तडित्सुमुखी क्लिन्नचक्षुः
मर्मंतुदया लालसावेदनया
मुहुर्मुहुः क्षुब्धमानसाविलोडिता
उपरता सरित्तीरे ।
भूकम्पाः सङ्गणकावयवे कागदे
प्रणयदुर्घटनामालिख्य समुद्रे,
उत्प्लुत्य निर्विण्णान्तराः
समाधिमापन्नाः ।
झञ्झाः प्रणयमनुसरन्त्योऽविस्मरन्त्यो,
वसन्ताल्पनां प्रोज्झितुं प्रयतमाना
उद्भ्रान्तास्तिरोहिता कान्तारे
विरहिणी व्रजाङ्गणेयं कौमुदी ।
जडीभूतेव सीतेव विषादमसृणा
विकचप्रसूनरङ्गे,
अभिनीय दुःखान्तसर्वं
ज्वालामुखी विवरे प्रविष्टा ।
पर्वणि वेलाः विकललुलितहृदया
प्रियवर्त्मना प्रताडिता लवणोदधेरुत्सङ्गे
केवलं प्रस्तरोच्चावचं शून्यस्योपचयापचया उपममुः ।
अधुना गोधूल्यमितो रसालास्ततः सहकारा मधूकवयस्या
दिशि दिशि प्रणयायामं मान्ति ।

## ६७. आहूयते कविर्मनोषी परिभूः स्वयम्भूः कालिदासः

हिमगिरिशिखरे
विबुधकेतने कैलासे
नूनं तिष्ठति तूष्णीं कैलासपतिः
नायाति च नायाति च दृष्टिपथम् ।

काश्यां वाणीकाशविहीनो
विश्वेश्वरभूताधिपविज्ञानपतिः ।

सरयूतीरे मर्यादापुरुषोत्तम एष खलु
न वदति किञ्चिन्, न वदति किञ्चित् ।

वृन्दावनधमने
रासस्मृतिपरिरम्भे
वंशीबोधकलीलापुरुषोत्तम एषः
मूकः सञ्जातः
प्रतिमापाषाणत्वं यातः ।

महामहोदधिवेलायां
प्रोञ्झितशब्दा निष्कापितजिह्वा
महाकराली काली खलु प्रतिमारूढा
सर्वप्रकारेण गिरा विमूढा ।

अमरा देवा अवनीं त्यक्त्वा
भाषणशक्तिविहीना स्वर्गं याताः
यद् गीर्वाणवागलङ्कारो
रससिद्धकविर्महाकविः
संयानपथप्रणष्टः ।

हंहो ! यूथीमूका
पाटलरजनीगन्धावेला मूकाः ।
शेफालीवनजाह्नवी मूका ।

शैवलिनीदर्पणसकलं मूकम्,
चन्दनवनमपि कृत्स्नं मूकम् ।
गन्धो मूकः,

मकरन्दो मूकः
गगनं मूकं, विश्वः सकलो मूकः ।

उपमा रोदिति, कविता विधुरा,
मूर्च्छितसुषमाबोधः,
प्रश्नास्तिमितः शाश्वतमूल्यानां संशोधः ।
पङ्गू लालित्यं, किञ्च प्रसादः
तयोः खल्ववसादः ।

नायकनायिके कुमारसम्भवे हि वक्तो वक्तः
'बोधतु ! बोधतु ! हे कविराज !'
साक्षाद् भावप्रकृतिसमाज !
अवतरत्विदानीं तनावतरतु
क्षमाविपुलपरिसरमध्ये,
वाणीं देहि च, वाणीं देहि
एतस्मै सर्वस्मै ।

संस्कृतवाणी, संस्कृतिवाणी
उच्यत एषा खलु मृतभाषा
भाषा न मृता,
नूनं च मृतानां भाषा
एषा सञ्जाता ।

हे पीयूषवर्षिन् पीयूषघन !
वर्षतु वर्षतु पीयूषम्
अमृतत्वाय नूनममृतत्वाय !

## ६८. चतुष्पथे पञ्चवक्त्रः परिभाषते

एकम्

अत्रैव खट्वां विनिधाय सुष्ठु,
अत्रैव विष्टरं विधाय कामम्,
अत्रैव गायामि यथेष्टगानम्,
संविधानं संशोधितं यतस्तु चतुष्पथस्य ।

द्वितीयम्

आहूय स्वजनं परिवार-सहितम्
सन्धाय वह्नि पाकं करोमि
भोजनस्यास्मिन् सुदेशे शृङ्गाटके ।

तृतीयम्

नित्यक्रियायाः प्रसरोऽनुकूलः
अत्रैव सर्वं स्वैरं करोमि ।

चतुर्थम्

अस्यां हि भूमौ जनसङ्कुलायाम्
नृत्यं करोमि निर्वसनं–दिगम्बरम्
मृदङ्गवंशीताललयानुपातम् ।

पञ्चमम्

संस्थाप्य वाहनं प्राङ्गणेऽस्मिन्
इन्द्रजालं सन्दर्शयामि,
स्थित्वात्र पश्यामि सर्वं मेलापके ।
पञ्चमुखः परमेश्वरो
यत्किञ्चिदभिलषति,
उन्मुक्तं सर्वं करोति तथैव ।
विकासस्य सम्प्राप्तोऽयमभ्युत्थानकालः
पञ्चवक्त्रः परिभाषते च
परिनिष्ठितं स्वातन्त्र्यं वै
प्रत्यग्रूपं कूटस्थमचलम् ।

## ६९. जनविजयस्य सङ्घजयस्य चेतना एकनीडाकाङ्क्षा

तरलतरलमसृणपारदर्शादर्शसमीरणपरिणाहानां पारे
अहह ! प्रभृत्युच्छ्वासानां सागरस्यानन्तगाम्भीर्याप्सु
लालसानां क्षीरसागरस्यापरम्पारामृतेषु,
महत्त्वाकाङ्क्षाणामायामहीनोच्छलसुधार्णवेषु,
प्रयासानां तथैव सप्तसागरात्मकसङ्कलनानां हिल्लोलेषु
तरति, बालहठमाचरति
चलति चोच्छलति
एको जलपोतः—
दुग्धधवलज्योत्स्नालेपितायस्कान्तस्य
( स्टेनलेसस्टीलस्य )
नहि, राजतः
आम्, राजतः
नहि, काञ्चनः, द्युतिमतः काञ्चनस्य
आम्, समुद्भासितस्य कलधौतस्य
नहि, नहि, बन्धो !
अक्षांशानां बन्धवो, देशान्तराणां बन्धवः !
हीरकस्य, आम् हीरकस्य,
तस्मिन् सलिलायोगे जलपोते
अवतिष्ठन्ति चतुःशतकोटिजनाः,
अतः परं बहुषु तटेषु चोरोक्ष्यन्ति
भविष्यगर्भाज्जायमाना बहवो
यात्रिणः सांयात्रिकाः !
पोतो ह्ययं नाम संयुक्तराष्ट्रसङ्घः ।
अस्य धातुरस्य शिखरम्
अस्य कर्णः कथयन्ति
'सङ्घे शक्तिः कलौ युगे,
सङ्घे ज्ञानं कलौ युगे,
सङ्घे भक्तिः कलौ युगे,
सङ्घे कर्म कलौ युगे ।'

हे मरुद्गण ! हे सूर्य !
हे देवतावाचिनीदिशः !
हे नीलविग्रहानन्तव्यापृते !
प्लुतत्वातिरेक !
हे मारकतकौशेयकोमल !
ऊर्ध्वम् ऊर्ध्वं शान्तेरजस्रप्रसार !
हे व्यष्टे !
हे समष्टे !
हे औचित्य !
हे सिद्धान्त !
हे गणित !
हे राजनीतेरर्थशास्त्रस्य सङ्गणक !
हे विज्ञानस्यालोकाः !
आकाशतरङ्गाः ! अवकाशप्राणायामाः !
यूयं वोढुं सक्षमा, अर्हथ
सङ्घस्यास्मिन् वोहित्थे
दुःखिनो विपन्नान्, रुग्णान्
विकलाङ्गान्,
प्रभञ्जनपुत्तलकपुत्तलान्,
बलाधिरूढान्,
दुर्धर्षोदग्रान्,
शक्तिसम्मर्दनान्,
सर्वान्, सर्वान्, सर्वान्,
सप्तसागराणां
दैवीनां दशेङ्गितवतीनां
प्रतिज्ञानां, प्रतिपत्तीनां, विश्रम्भाणां तथा
ऊर्मीणां पारे
सुरक्षिततटे,
समृद्धेः सुखस्य, सामञ्जस्यस्य, सहयोगस्य
प्रवुद्धसर्वोश्लेषिणीशान्तेः
समग्रवसुमत्यामुत्तुङ्गतायां च
तस्यास्ताराङ्कितस्तम्भान् एकीकुर्वतः प्रेम्णः—

मानवताया वेलायाम् ।
हे सङ्घ ! त्वं जय !
हे सङ्घस्य पाणयोऽङ्घ्रयः !
सम्मग्रावयवाः यूयं सर्वे सर्वे
युगपत् जयत ।
हे दिशावोधस्य, सत्यस्य प्रतिवद्धतायाः
ध्रुवस्वप्नाः !
यूयं विजयध्वम् !
समे ! अनेनोद्घोपेण भवतु मुखरिता गुञ्जिता ।
ओ आकाश !
प्रसरतु ! प्रसारयतु !
प्रतिध्वनिमेतम्,
उत्कण्ठारणनम्
लालसाप्लवनम्,
अभिलाषाक्वणनम्,
शकलजीवितशरणम् ।

## ७०. पथालेखः

विश्वे तिमिरासुरं
सर्वतः समीक्ष्य
अहम्मन्यमुत्सेकितम्
ख-स्वस्तिके प्रतिष्ठितस्य नक्षत्रस्य
हृदयं भृशं क्षुब्धं वेलोद्वेलितम्
परदुःखकातरत्वं कारुण्यं
नीहारश्लक्ष्णत्वं नवनीतद्रवणमगात् ।

तद्धि उत्तुङ्गताकिरीटभूषणं
निःसीमकूप उत्प्लुत्य, दारुणं सङ्घर्षं समारभ्य
तमोराज्यं प्रमार्ष्टुं प्रयतमानम्
अनन्तयात्रां संलक्ष्य प्रस्थितम् ।

आहूय तद् उद्बोधयदाकाशमन्दाकिनीं
त्विषासिहं, विबुधदौवारिकं ब्रह्माण्डस्य धनं
सर्वाणि ज्योतींषि,
क्वचिद् गुहासुप्तं सुधारश्मिं,
तत्कालपुत्रः कालांश इव
संयातपथप्रयातमत्ततः,
मूकैर्वाचालैः सर्वैर्निगदितं
'तन्नक्षत्रमुपरतम्' ।

परन्तु तदमरं मत्वा
सप्तर्षयः स्मारं स्मारं
तस्य स्मृतिपदव्यां
विकिरन्ति पुष्पाञ्जलिम् ।

ध्रुवस्तु बुद्धमुद्रयाऽचलकरैः
तस्य पथालेखं, महापरिनिर्वाणम्
अनन्यत्यागोज्ज्वलं
नौत्यद्यावधि प्रतिदिनं मुहुर्मुहुः ।

सांयात्रिका अत्र
जानन्ति सर्वे तां कथाम् ।

## ७१. सुरभयति कुन्दशेमुषी

रुनुन् झुनुन् रुनुन् झुनुन्
रुनुन् झुनुन् रुनुन् झुनुन्

शिङ्क्ते ज्योत्स्ना
कैलासक्तत्स्ना
पुष्पितस्वप्ना
पाटलप्रश्ना
प्रणयनिकेते
सुधाभिषेके

रुनुन् झुनुन् रुनुन् झुनुन्
रुनुन् झुनुन् रुनुन् झुनुन् ॥ १ ॥

निःस्वनरागाः
इन्दुविहागाः
मन्त्रितसुरभिः
विह्वलावधिः
आम्, ताथेयी !
आम्, ताथेयी !
शारदोर्वशी
कुन्दशेमुषी
नृत्यति नीलम्
श्वेतोन्मीलम् ॥ २ ॥

मधुरनिमन्त्रण !
प्राणनियन्त्रण !
निशीथ हे ! शृणु !
रूपकं वृणु !
एहि देहलीं
रजन्मालिनीम्
एकलगीताम्
कविपरिणीताम्

स्पृश ! सन् सनन !
पेशलपवन ! ॥ ३ ॥

जोषं ! जोषम् !
जोषं ! जोषम् !
तुहिने पन्थाः !
रसरोमन्था
शाद्वलकन्या

धक् ! धक् ! धक् ! धक् !
झक् ! झक् ! झक् ! झक् !

आतुरधरणिः
सपक्षतरणिः
डयते प्रेम्णि ॥ ४ ॥

विश्वसुशान्ते !
युद्धक्षान्ते !
श्लक्ष्णं श्लक्ष्णम्
कौशेयवृष्णम्
कर्पूरलक्ष्म
तारापक्ष्म
तव खलु हर्म्यम्
सर्वैर्गम्यम्
इह विशति शिवः
समाधिविकिरः ॥ ५ ॥

## ७२. ······हे !

करुणानिधान !
जगतीप्रमाण !
जीवनवितान !
प्रतिमाप्रधान ! ॥ १ ॥

उपमाप्रतीक !
विविधाव्यलीक !
मरकतकिरीट !
वञ्चितशिरीष ! ॥ २ ॥

इन्द्रियशरीर !
कविताकुटीर !
सम्भ्रमसुधीर !
ज्योत्स्नासुतीर ! ॥ ३ ॥

सुषमाविधान !
आशाविमान !
सकलावदान !
कलकण्ठतान ! ॥ ४ ॥

अगणितमयूरव !
सरणिस्वरूप !
शून्यत्वरूप !
पूर्णत्वभूप ! ॥ ५ ॥

अपचयनिदान !
उपचयविराम !
अतुलितसमान !
सत्तानुपान ! ॥ ६ ॥

वृद्धत्वमार !
संसृतिसंहार !
सुमहाससार !
गीतावतार ! ॥ ७ ॥

अनुपम ! सुविकच !
सुरभित ! सुविहस !
जागरण ! विलस !
आयाम ! विकस ! ॥ ८ ॥

करुणानिधान !
जगतीप्रमाण !
जीवनवितान !
प्रतिमाप्रधान ! ॥ ९ ॥

## ७३. १५ अगस्तः स्वतन्त्रतादिवसः

मातृशुभ ! अभिषेकविभुदिन ! वन्दना ते !
राष्ट्रशुभ ! अमरत्वशिवदिन ! अर्चना ते !

मुक्तिशतपथविमलप्रहरी, जागरणसन्धान ! हे त्वम् !
कोटिनरप्रत्यूष ! शाश्वत ! दीप्तिमयवरदान ! हे त्वम् !
अद्य पर्वणि गीत ! मधुमय ! त्यागकुसुमाह्वान ! हे त्वम् !
कोटिशिरसां बलिसुगाथा गगनवसुधाप्राण ! हे त्वम् ! ॥१॥

त्रिपथकेतन ! वर्णत्रितये हार्दकाङ्क्षा युगयुगानाम्,
रङ्ग-वृन्ते स्फूर्तवक्षसि श्वाससरणिः बहुनराणाम्,
अद्य किल निर्माणमयजगवितत मनुसन्देश ! हे त्वम् !
ध्वान्तहारिन् ! पथप्रदर्शक ! नवलभासोन्मेष ! हे त्वम् ! ॥ २ ॥

विजयदाने सफलविक्रम ! मातृशुभ-शृङ्गार ! स्वागत !
रामराघवराज्यघोषः, स्वप्नमयसंसार ! स्वागत !
वन्द्यबापूविबुधवाणीः कल्पनाः खलु कामनाश्च
एकवैद्युतमसृणस्पर्शे पूरय वरद ! याचनाश्च ॥ ३ ॥

अरुण उदिते भारतीयाः सपदि कुर्वन्ति शमशपथम्—
गर्व-ज्योत्स्ना नः सुविकिरति वेदभूमौ रक्तशपथम्—
सकलजनहितसाधनायां राष्ट्रगौरववर्धने च
स्मरणवर्त्मनि ते वयं वै तत्परा बलिसर्जने च ॥ ४ ॥

मातृशुभ ! अभिषेकविभुदिन ! वन्दना ते !
राष्ट्रशुभ ! अमरत्वशिवदिन ! अर्चना ते !

## ७४. कियन्ति अक्षीणि युगपत् शब्दायन्ते ?

कियन्ति अक्षीणि युगपत् शब्दायन्ते ?
स्पष्टं मुहुर्मुहुः ध्वनन्ति ?
आकाशो नासीद् रिक्तः महाशय !
महानुभाव ! महाभाग !
तत्र मानवताया अस्थिमांसरक्तोपचयाय
सहृदयदेशस्य, तार्किककालस्य प्रतिज्ञाः
उत्तुङ्गानामपि उत्तुङ्गानां शपथानां भावनाः,
महतामपि महतामनुबन्धनिबन्धानाम्
हस्ताक्षरितानाम्
विशालानामपि विशालाः सम्भावनाः
निर्निमेषं विस्फारितविस्मितचारुनेत्रम्
संवीक्षन्ते स्म, संवीक्षन्ते स्म !
रुद्रस्य रुद्राण्याः सिंहवाहिन्याः सिंहानां तथा
ता अनन्तदृशः—ते अन्तरात्मनः !
सुहृत् त्वं शत्रुर्वा
बन्धुर्वा विध्वंसको वा
बिभेषि स्म तेषां सिंहानां समीरणशरीरिभ्यः
हरहरायमानेभ्यः केसरेभ्यः !
परं तेषां लोचनानां शब्देभ्यः
वार्ताभ्यः संवादेभ्यः
तेषां साजसज्जेभ्यः
त्वं नाबिभेः ! त्वं नाश्रृणोः !
तेषां नयनानां प्रतिबद्धत्वेन, समर्पणेन
अक्षुण्णोन्मेषेण सार्धं न त्वम् उदडयथाः !
अद्य अद्य च तानि नयनानि तानि नयनानि
अमाया वक्षसि ललाटे च अवतीर्णानि—
स्नेहेन सह चञ्चलया सह
धातुभिर्मृत्तिकया सह उपांशुभाषमाणानि,
तव हस्ते हस्तं दत्त्वा,
हस्तेन हस्तं स्पृष्ट्वा

पर्याकुलायां धरण्याम्
नवछदिराभोगानाम्,
नूत्नप्रघणानाम्,
अभिनवगोपुराणाम्
सद्यः शाद्वलप्राङ्गणानाम्
विततविभ्रान्तवसुमत्याम्
अश्वत्थमूलानां, पाटलीपुष्पाणां कण्टकानां च
आलवालानां विविराणां च
माध्यमेन शृणु !
तानि सकलान् कालायसमहिषासुरान्
निश्चप्रचं हनिष्यन्ति,
सलकान् स्फुटितजीर्णशीर्णलवान्,
परिच्छाया आदर्शशीर्षकानि
मनोः सर्वाण्यस्तित्वानि
आरोपयिष्यन्ति, उपवेशयिष्यन्ति
देवानाम् एकप्रकारेषु
सामसन्नद्धसुस्थासनेषु ॥

## ७५. ध्रुवस्य वज्रघोषः

भूकम्प ! त्वं गर्जसि मिथ्या
वभ्रीवत्वां निक्षेप्स्यामि ।
ज्वालामुख ! ते लोहितनयनम्
ताण्डववमनमपि द्रक्ष्यामि ।
निजलालामिश्रणमेधं त्वां
विकरालं भीमं पास्यामि ! ॥ १ ॥

तडिदुल्वणदुर्धर्षे ! शान्तक्षोणीं
मा सन्त्रासय मूकं गगनम् ।
अपशब्दास्ते करकरवालः
व्यर्थं सर्वं जिह्मं चलनम्
सप्तकवर्णप्राचीरायाम्
कारायां ते वन्धनकरणम् ॥ २ ॥

झञ्झे मूर्खे ! ननु झिल्लीत्वम्,
किं ते सुरसे ! झिञ्झिमघोषः ?
किं ते झर्झरडिण्डिमनादः ?
व्यर्थं ते जोहूत्रो रोषः ?
औपसरक्तचपेटाघातो
यदि मे, ते भूलुण्ठनतोषः ॥ ३ ॥

उल्के ! धूमकेतवश्चण्डाः
जागृत ! जागृत ! हित्वा स्वप्नम् ।
मम मित्राणां पथिभ्यो दूरं
गच्छत, कुरुत न रुन्धनयत्नम्
पश्यत ! पश्यत ! संयानपथम्
नभ्यं कुरुत न कञ्चित् प्रश्नम् ॥ ४ ॥

एषोऽहं मसिसङ्कुलतानाम्
दर्पं तारानक्षत्राणाम्,
प्रतिनिधिभूतो वर्त्मोन्नयनम्
कुर्वे ज्वारे च वहित्राणाम् ॥ ५ ॥
त्वं शृण्वरे प्रलय ! ननु वल्गां
तुभ्यं दत्वा संयमयामि ।
सद्यः सुन्दरसृष्टिं कर्तुं
तुमुलं घूर्णं खलु नमयामि ॥ ६ ॥

## ७६. प्रत्यभिज्ञाय सृष्टिप्राणान्

अरे कलधौतजागरणाः
उद्दामप्रयासाः !
उत्साहानुप्रासाः !
यन्त्रपुत्रकगीतमहाप्रसादाः !
प्रभाते कुङ्कुमतिलकं कृत्वा;
मध्याह्ने किरीटैरलङ्कृत्य;
सन्ध्यायां सरागं हस्तं स्पृष्ट्वा,
समयो वोऽभिनन्दितवान् ।
किमिदं वसन्तोपत्यकायाः
परिरम्भे विस्मृत्य सर्वम्
कान्तारे क्रीडाकौतुकमाश्रित्य निखिलम्
युष्माभिः सत्येन हस्ताक्षरितम्
सङ्घर्षैः साक्ष्यसनाथीकृतम्
मूल्यानामनुबन्धपत्रम्
कस्याञ्चित् कज्जलगिरिगुहायां
सुरापानसंवेदनायां प्रक्षिप्तम् ?
इदानीन्तन प्रगतिरुपचय आरोहः
आकाशगङ्गातटे उपविश्य
युष्मान् उपहसन्ति सुखप्ररोहः ।
किं करिष्यति तारायूथः
वालुकाकणिकालोकसन्दोहः ?

## ७७. मारकती प्रतिज्ञा

पारदर्शी तनुः
पारदर्शि मनः
पारदर्शि स्मितम्
पारदर्शी हासः
पारदृश्वरी मनीषा
क्रान्तिदर्शी ध्वनिः
कोऽयं कोऽयम्

ऊर्ध्वं सुराणां श्वाससमुच्चयः
अधः ईश्वरप्रतिनिधीनां प्रश्वाससञ्चयः
सर्वं पुनातीति तन्नामकरणीयः
शब्देतरे सुरभिवाहोऽपि
अतीन्द्रियो देवदूतः स्मरणीयः
समन्तात् तस्य शाश्वती
मारकती प्रतिज्ञा
तस्या नीलकण्ठी अन्या
परमशुचिता प्रत्यभिज्ञा

सर्वेषां सम्मेलनाय
सर्वेषां सामञ्जस्याय
एकपटे सर्वेषां वयनाय
सम्भूयसमुत्थानगीते आहरणाय
कण्टकैरङ्गीकृता
पुष्पैरुररीकृता
पल्लवैः स्वीकृता

कान्तारैः समर्चिता
वसतिभिः सम्पूजिता
मरुस्थलैराधिता
पर्वतोच्छ्रायैः समर्थिता
ग्रामपथैरनुसृता
राजमार्गैः संस्तुता
गृहे गृहे उष्णीषीभूता
सौधे सौधे किरीटीकृता

सञ्जाता सर्वैः शिरोधार्या,
सा खलु व्यवहारे कार्यरूपे
सर्वैः परिणता कार्या ।

## ७८. अस्मिता माधवी

इमाः किञ्चिद् गातुकामा
हरितहरिता नादविच्छितयः,
तासां फाल्गुनालिङ्गने
रक्तपीतनीलसुरभयः;
हिन्दोले दोलायमाना
प्रणयहस्तक्षतानां न जाने कियत्यः
भ्रातृजायासदृशा मुग्धा नवोढाः
सन्दर्भमरीचयः ।
प्रणयस्पन्दनानां हस्ताक्षराणि
हिमालयाद् धरण्यामवतीर्णानि
समीरकर्णकुहरे मन्दं मन्दं
किञ्चित् कथयन्ति;
शुकसारिकाचटकान्
किञ्चिदुद्दिश्य उत्प्रेरयन्ति
अश्रव्यवार्ता कुर्वन्ति;
स्वीयस्मितानि गोधूमयवानां
कौशेयकरवालेषु विस्तृणन्ति ।
स्वहसितानां पुङ्खसीरिकालघुलघुरङ्गविरङ्गे—क्रीडनैः
अलसीकलायारहराणां
गीतिमन्दरावाह्वानानि
कञ्चुक्यः कटाक्षपातानि
धम्मिल्लाः, कवर्यः सहास्तितस्य
आलवालान् अलङ्कुर्वन्ति ।
विभाववासन्तीवधूतृषाः
यामिन्यः लघुलघुगुप्तश्वेतपोट्टलीकातः
श्लक्ष्णसलज्जकुहूकुहूरागिनीभ्यः
निर्झरन्ति ।
प्रत्येकायामः कवितायाः प्रत्येकपत्रम्,
चटुलप्रतिबद्धता, अभिलेखः
तारुण्यं सम्प्राप्ताः,
किञ्च नवमदिरायामाकण्ठनिमज्जिताः

उदग्रयौवनारूढाः
आत्मनिलयस्य प्रत्येकदिशाम्,
उद्दामतायाः प्रत्येकदशां
स्ववक्षोभ्यः पृथक्कर्तुं नेच्छन्ति ।

आम्रस्य प्रत्येकपरिच्छाया
शाल्मलेः रक्तस्वप्नस्तवकाः
वंशवनानां प्रत्येकेङ्गितम्
किंशुकालोहितब्रह्मानन्दछन्दांसि,
उद्यानानामखिलान्तरालानि, पर्यान्ताः
पुष्पोपवनानां मिलनातुरसंश्रयाः
मुरलिकानां रसपरिप्लुतसुधांशुवर्षायां
मुहुर्मुहुः विद्रावयन्ति
सृक्कणीं परिलेलिहानं मिथुनराशेः
तादात्म्यपरिप्लवपरीवाहालोकम् ।

प्रत्येकशाखायाम्
किशलपत्राणां प्रत्येकाभिलाषाम्
संवेदनायाः प्रत्येकेक्षितम्
ह्रदस्य चाटुल्यस्य
प्रत्येकावगुण्ठनम्
कोणः कोणः पाययति
प्रत्येकालोडितविलोडितद्वैतं
तरलसरसाद्वैतस्य चषकम् ।

आन्दोलनानां परागणम्
उद्वेलनानां विकचीकरणम्
अन्तर्वत्नीनामूर्मिणां दोहदान्
पूरयितुं विलुलितं व्याकुलीकृतमानसम् ।

अस्मितादिगम्बरत्वं प्राप्तुम्
अनुभूतेः समग्रक्षितजानि उल्लङ्घितुम्
प्रहर्षाप्सराः समस्तमर्यादाः हस्तामलकवत्कर्तुम्
वनपक्षिणां, वन्यश्वापदानां
प्राणिनां प्रत्येकाभिधानम्
आह्लादस्यापूर्वसुधांशुं विधातुम्
आमूलचूलापादमस्तकम्
अमृतवेलां सङ्कुलेयम् ।

## ७९. सौन्दर्यानुबन्धाः

हरितहरितविपुलविपुलाक्षराः
परमप्रियनिःस्वनसुस्वनमधुरमधुराः,
प्ररोहकलिमुकुलैश्च रेखाङ्किताः,
विकचकुसुमहासैश्च हस्ताक्षरिताः
विद्युद्व्योमपवनसाक्ष्यसमर्थिताः
पार्श्वे चेन्द्रस्य सप्तसंज्ञाभिरलङ्कृताः
उडुनक्षत्राणां पत्रोत्पन्ने प्रलेखेषु
उदात्तेषु त्विषीमत्सु वारं वारं समुद्धृताः
चिरन्तनाः सर्वव्यापकाः सौन्दर्यानुबन्धाः ।
उषसि कश्चित्प्रहर्षेगदगद्कण्ठः
वाचयति वाचयति च श्रद्धालुरनुरक्तः,
सन्धौ समागते समापने चोपसंहरति
सुधांशुर्वा मङ्गलो वा ध्रुवो वा
'यत्किञ्चित्करणीयं यत्किञ्चित्करणीयं
तत्सर्वं सुन्दरसम्बन्धेन, सुन्दरविधिना सुन्दरभावेन
अहर्निशं शाश्वतं तत्करणीयम् ।'
इति शिखरे शिखरे
तु समे विषमे
च स्तवनीयम् ।

## ८०. अन्वितिः

पूर्वा च परा च वक्त्रलेखा
उदक् चावाक् च मुखत्रासवेला
घूर्णतो भ्रमतो भूगोलस्य मुखरोरक्तविस्फूर्जथुः
उच्चारयत्यभिधानानि—जापानः, चीनः
भारतम्, आर्यानः, अर्वः
इंगलैण्डः, रूसः, फ्रांसः, संयुक्तराज्यः
कैनाडा, अफ्रीका, आस्ट्रेलिया, ब्राजीलः, पेरुः—
चिलीवेनजुएलाण्टरकर्टिकप्रभृतीन् ।
कोऽयं प्रतिमावतारो ननु, किञ्चाद्भुतैकं नाम ?
रजच्छङ्खान् सागरा धमन्तः
उद्घोषयन्ति सत्यन्यायाहिंसाप्रेमानुप्राणितः
पवित्रेश्वरसंज्ञकारावबोधको राष्ट्रसङ्घ एष खलु ।
राष्ट्राणां सरणौ सरणौ सोपाने सोपाने
ग्रामे ग्रामे नगरे नगरे सङ्ख्याकानाम्
असङ्ख्यातानां दिक्कालादवच्छिन्ना
एषा बहुकेतना, बहुभाषा, बहुहस्ता
बहुचरणा बहुप्रयासान्वितिः ।
अन्वितिरन्वितिः खल्वेषा विकासाय,
सामञ्जस्याय सहकाराय, शीलाय,
विनयाय क्रमेणामृतत्वाय
कल्पतां, कल्पतां, कल्पताम्
पथि, पथि, अवरोधे, अवरोधे
विरोधे, विरोधे, चानुरोधे, अनुरोधे

## ८१. आत्मीयता

दृष्ट्वा दृष्ट्वा स्मेराणि लोचनानि
निशम्य निशम्य गुञ्जनमधुरमधुराणि
श्रवणानि ।
आघ्रायाघ्राय
शेफालिका पाटलप्रीतप्रीतानि घ्राणानि,
षड्रसजगदास्वाद्यास्वाद्य
लालास्रवन्तो वाग्विदग्धा रसवत्यो रशनाः,
परिशील्य परिशील्य पुलकिताः
गद्गदिताः श्लक्ष्णमसृण-मधुप्रियावधारणाः
कुसुमितशिरीषदलाः संस्पर्शाह्लादनाः ।
पुरनिवेशे स्वस्तिके
पद्मके सर्वतोभद्रे वा
अन्यस्मिन् वा
चरति, सञ्चरति
सन्दिशति संवदति
सन्धिलालिता
कुसुमावचया
उड्डीयमानशुकानुरेखिता
रविराकासुता—एषा—एषा
वसुधावक्षसि व्योमशिरासु
आत्मीयता !
प्रकृतिपरिनिष्ठापर्याया
आत्मीयता !

## ८२. बुभुक्षा-समीपे

चन्द्रमसः क्रोडे पालितायाः असम्भवतायाः
रौद्रः कालाट्टहासः,
इन्द्रजालाहतायाः निराशाभिधायाः
कस्याश्चिद् बुभुक्षितप्रेरणायाः पुनर्वासः,
उड्डीनताम् अर्धचन्द्रदानं कुर्वतः पवनस्याधः प्रकाशः,
ओह ! प्रघूर्णरूपिभिरुद्वेलनैः सह
सत्यमपि क्रीडति—अयं तेषां द्यूतपाशः ।। १ ।।
मसौ क्षिप्रा रसार्द्रकविता शुष्का सञ्जाता
शाखायां शाखायां मरुस्थलेषु ।
प्रश्नानां परिरम्भेषु चैतन्यहीनान्युत्तराणि
पिपासायाः अनन्तपलेषु ।
श्वासस्य सम्प्रस्थितिः परमविषण्णा द्रवीभूता
संलापपरस्यामृतस्य समुद्रतलेषु ।
लक्ष्यं एकपक्षीय-प्रलेखं निर्णयं लिखन्ति
केवलं पुष्पोत्थितस्य चक्रवातस्य बलेषु ।

## ८३. पलाशपुष्प क्रान्तिदूत हे !

हिमाद्रि-हेम-विन्ध्य-सह्य-शुक्तिभिर्निगद्यते,
स्वरूपगन्धपञ्चपङ्क्ति सूक्तिभिश्च प्रोच्यते–
वसन्तरक्तक्रान्तिनोदनः प्रफुल्लशोभनः
सुक्रान्तिकाल आगतो विक्रान्तकाल आगतः
वसन्त ! स्वागतं ! वसन्त ! स्वागतं ! वसन्त ! हे ।

अनङ्गरक्तवेग हे ! अनङ्गबाणवेध हे !
सुकण्ठकण्ठघोष हे ! प्रहर्षरागतोष हे !
उदग्रश्टृङ्गदर्प हे ! निलिम्परङ्गकर्ष हे !
पलाशपुष्पफुल्ल हे ! पलाशरक्तशब्द हे !
मिलिन्दतूर्यजात हे ! मिलिन्दतूर्यनाद हे !
ध्वनन्मृदङ्गराग हे ! ध्वनन्मृदङ्गवागहे !
प्रभातरक्तयाम हे ! प्रभातरक्तवाम हे !

रणाङ्गना दिनान्तचण्डिका ब्रवीति लोहितम् ।
करोति कृत्स्नक्रान्तिशाल्मलिश्च घोषमौषसम् ।
वने वने च पाटली तु क्रान्ति-दूतप्रेषिणी ।
अनन्तकण्टकैश्च कुन्तकैरुदग्ररोपिणी ।
तडित्प्रसारतन्तुसर्ववर्त्मगुप्तलेखने
सुशान्तवह्निजिह्वदेशकालशाक्तमन्त्र वै ।
विहायसा सुरक्तनेत्र-मङ्गलो ब्रवीति वै—
त्वमेहि रक्तकेतनः सखे वसन्त ! चत्वरम् ।
शिरा शिरा प्रवाहिणी सुक्रान्तिरक्तवाहिनी ।

प्रसूनवज्रस्वागतं ! प्रसूनवह्निस्वागतम् ।
क्रान्तिकाल ! स्वागतम् ! क्रान्तिकाल ! स्वागतम् ।

## ८४. सीमान्तान्वेषणम्

आह्लादस्योत्कर्षः,
प्रमाया मौनालापः,
पवनस्य स्पन्दने स्पन्दने
परापश्यन्तीमध्यमावैखरीवाणी-परिरब्धानि
शिञ्जनानि,
शान्तिस्वरूपाणि मधुराणि
तेषां सङ्गीताक्षराणि ।

रश्मिणीधराया निरीहं, निष्कामं
निर्विकारम्
भाषमाणं दर्पणत्वम्
इदमेतत् निर्निमेषम्
आवर्षति निमिषान्
रसालमधूकेङ्गिताहूतान्
समन्तात् ।
उद्भ्रान्तं खल्वासीच्चत्वरं—
सङ्कुलत्वं याचमानं वास्तवं जीवितम् ।
अर्धनग्नकृषीवलस्यात्रैव
जिजीविषा नाणकं
अत्रैवादधाति मारकतीं द्युतिम्,
अत्रैवाहरति प्रयासचलावणी
शोभां च काञ्चनीम् ।

प्रस्फुरणमिदं दिग्विभागेऽस्मिन्
उषाया आह्वानम् ।
परिसरोऽयं सम्बलं ज्ञानस्य
अत्रैव अत्रैव भक्तेः कर्मणश्च
दोलति तारल्यसागरत्वम्,
वेलाया नन्दनविपिनम् ।

## ८५. युगपदुदयति चन्द्रो युगपदुदयत्यरुणः

मुग्धत्रपामधुवेशः,
मधुरप्रपारसलेखः,
विकसति तिमिरम्,
विलसति मिहिका
केयं प्रत्यभिज्ञा ?
किमिदं प्रोच्छलप्लवनम् ?
कथमेतत्सङ्क्रमणम् ?
कमलदले विकचेयमपह्नुतिरेपा,
नन्दनवनसंवर्धित-स्मितसम्पुटकरणम् ।
जागरसुपुप्तिसमाधौ
भ्रान्तेरनुवरणम्
अनुरेखित-हृदयम्
निवेदितनिलयम् ।

उद्वेलनप्रक्षालितरेखा सुधापृषत्तरलाश्लेषा
भ्रमयति सुषमा लोहितपाटलीपथा
कौशेयविभक्तिः किमद्वैतयति—
अद्वैतकिशलयविस्मृतकान्तारं
मणिमयस्पर्शस्य शिरीषपेशलं व्यापारम् ।
स्तम्भितशम्पाशकलम्
अनुबन्धितमेतदायामसकलम् ।

विस्मितपरिणाहाः
पृच्छन्ति च स्फुरितं सीमानम्
लोकोत्तरानन्दस्य रूपस्य किं प्रत्यग्रप्रमाणम् ।
सकलं वञ्चयते मे नन्वनुमानम् ।
अयि दलद्वय !
रभसं ब्रूहि का ते परिभाषा ?
किं ते खल्वभिधानम् ?
कस्त्वं शब्दः ?

कस्त्वम् आरोहः ?
कस्त्वं गीतम् मीडम् ?
यत्र खल्वारोहति गगनम्
यत्र व्याहरति व्यवहारम्
तुमुला जागरिता मूर्च्छना ।

उपहसति ब्रह्माण्डं तर्कणा,
गाम्भीर्यं त्वं स्मेरम्,
निःस्वनता त्वं स्मेरा,
तिमिरं त्वं व्याकुल-हृदयम् !
आलोककिरण !
किं त्वं पर्याकुल-वलयम् ?

## ८६. शून्यत्वमश्नुते

दर्पणः पुस्तकमुद्घाट्यावलोकयति
रसालं नाटयति, सिंहं नाटयति···ततः परमपि
अर्थानां सूर्य-ग्रहणं चन्द्रविन्दौ
स्वल्पोक्ते ह्यवतरति,
वध्नाति मसि-हृदयम् ।
काँचतनुसरसि शैलराजो निमज्जति
अरुणोदयोऽन्विपति विश्वं
पुरुषार्थचतुष्टयस्य चतुरङ्गम् ।
दिशाकाकश्च रटति क्रोशकुटिलां सरिताम् ।
मेचकगृद्धस्य चञ्चौ मांस खण्डस्य त्रासदी-
पृथक्कृतो वृक्को, यकृद् वा हानेः क्लान्तेः
( सन्ध्या कथं ? सम्पूर्णप्रत्यभिज्ञाभावात् ) ।
दर्पणः सोमपायी इव मदाकुलो
विह्वलः प्रचरति प्रचलति च,
शवसाधकतान्त्रिक इव वन्दीकृतान् वृक्षान्
        वल्लरीः आकाशमुण्डं
        नूनं निगलति च ।
दीपशिखा दृश्यभूकम्पात् तस्य सलिले
उत्प्लुत्य सम्मूर्च्छिता शीततां याति ।
पुष्पमाराध्यति तस्य छद्मगाम्भीर्यं
            तत्र पवनं स्वप्ने वाति ।
संज्ञासेतुः परिच्छायातस्करः
कवितातटाकः सङ्गीतचिह्नानि
विषादगीतानि
अर्जति व्ययति ।
कोपे स हि काँचः ( त्वं नामधेयोऽहमाभिधः )
वहुलपथे खल्वपह्नुते
पर्यवसाने यायावरत्वात्
सर्वपरिरम्भणाद् उपहतस्मृतिः प्रतिलोमः
आदर्शानुपानं शून्यमश्नुते ।

## ८७. मृत्यवे दीपदानम्

तमिस्रापथाद् दूरे
अज्ञातहिमखण्डजाताः
नागफणाः पाटलीरागाः
दरीदृष्टाः सर्पकुटिलां गतिं कुर्वाणाः
सम्पीतिमग्नाः सीमान्तस्य नौकामावहन्तो
भूर्जपत्रग्रन्थैः, वाचालैर्विद्युद्दीपैः
वाल्मीकिभिश्च ।

वनानि तान् आह्वयन्ति स्म
भूकम्पास्तान् दुर्लालयन्ति स्म
ज्वालामुखी सागरगह्वराणि
तान् उपदिशन्ति स्म ।
अतिथौ असमारोहे गोधूममन्नकूटं
नानामिष्टान्नानि च समाहूय
निरामिषसामिष-स्वप्नसत्यानि
जोषं दग्धुराकाशशङ्खम् ।

कनीनिका-पृष्ठभागे बहव उल्कापाताः
सञ्जाताः ।
विमानो बलान्नीतो दुर्घटना काचिदन्या वा ।
गणितस्य शेषोऽपि शेषतामगात् ।
बीजगणितेन रहसि सापेक्षवादः,
परमाणुशक्तिः
सश्लेषणं च निर्वचितानि
विखण्डनं बहुकर्मकत्वादीनि दर्पणे
दूरदर्शने च दर्शितानि ।
पर्यवसानं ? मसेरालोकस्य वा ?

परिभाषा सौधस्यऽलिन्दे
उटजस्य खाते रोदिति ।
विभाषा यमस्य वामाङ्गिनी
हसति सक्तून् भुङ्क्त्वा,
उपहसति मुण्डमालिसमीपे
मुण्डमालम् ।

## ८८. अनुरोधः

अतीन्द्रियासक्तेरनासक्तेर्वा
आयामरहितायामस्य
लवे लवे
आदर्शप्रार्थनाप्रतिविम्बितादर्शस्य
मधुरायाः
उल्वणायाः
केनापि रामलक्ष्मणानवछिन्नाया
अल्पनाया अल्पनायाः
एते एते ऐते
विग्रहवन्तो विग्रहवन्तः सगुणाः
पञ्चशतकोटिसङ्ख्याका अनुरोधाः !
शान्तिः ! शान्तिः ! शान्तिः !
शान्तिः ! शान्तिः ! शान्तिः !
विश्वेऽस्मिन् अस्मिन् अस्मिन्
समग्रवसुमतीरशनाशिञ्जिताः ।

हे उषे ! हे मध्याह्न ! हे सन्ध्ये !
हे कुहु ! हे सिनीवालि !
हे पौर्णमासि !
हे मौन-व्याप्ते !
हे मुखरकोलाहलदीर्घजिह्वे !
हे आलोकवलोर्जादीनां सर्वे प्रतीकाः
पश्यन्तु ! अवन्तु ! परिरक्षन्तु !

हे जीवन्तः श्वसन्तोऽनुरोधाः !
धरालङ्काराः झिङ्गिनीप्रकाशाः !
न भवन्तु न भवन्तु न भवन्तु
सङ्घर्षस्य अवरोधस्य युद्धस्य
प्रश्नचिह्नानि
हस्तमस्तिष्कान्वितानि
प्रेताविष्टानि ।

## ८९. ऊर्मिप्राङ्गणे चलनकलनं राशिकलनं च

पाटलीमूले कण्टकानां वार्ताहराणां सम्मुखम्
अशिञ्जद्भिर्भ्रमरैः
उत्खनितं स्तोत्रशीर्षकम्
'प्रयासा एव जीवितम्' ।
शान्तेरुल्वणगगनचुम्बिक्रोधप्रसरे
ज्वलद्भिर्ज्वालामुखैः
सुपुप्तौ प्रविष्टैरन्विष्टम्
'आत्मसुधार एव विश्वसुधारः'
अनन्त प्रहारैराघातैराकाशेन
नीलाभव्रणत्वप्रयातेन
उच्छ्वासाध्मानेन
महच्छोथं स्फीतिमभ्युपागतेन
वेदनारिक्तेन
कोटिकिरणमूकवंशिभिः
शैलराजस्य हृदयं निनादितम्
'आत्मजय एव ब्रह्माण्डविजयः' ।

इतस्ततः परिभ्रमता
सर्वैः कलहायमानेन
प्रचण्डप्रभञ्जनेन
स्वीये पारदर्शिनी शान्तमुकुरे
अक्षीणि उन्मील्य
कण्टके कण्टके पत्रे पत्रे
किशलये किशलये
शाखायां शाखायामवलोकितः
'आत्मदमनम् एव सर्वदमनम्'
अनुबन्धे अनुबन्धे प्रस्तराणां
अभिषेके अभिषेके परिप्लवानां
उत्क्षेपे उत्क्षेपे
अवमर्दने अवमर्दने

विषण्णविरावे गह्वराणाम्
मृत्तिकानीडैर्हस्ताक्षरितानि
सर्वाणि लिखितानि
'प्रेम एव पूरकं कर्तृत्वस्य,
कर्तृत्वं हि पूरकं प्रेम्णः ।'

उड्डीनाः पक्षिणः पश्यन्तु
एतस्य पुष्पिकायाम्
'ह्यः' जोषमास्थाय देवाराधनं करोति
'श्वः' स्मितारूढः चलति
'परश्वः' हसति कस्मिंश्चिदरण्ये दिवारथे
उटजद्वारि प्रकोष्ठाभ्यन्तरे वा
अट्टालिकाया ऊर्ध्वम् किमुत !

## ९०. मानवाधिकारप्रत्यूषः ( १० दिसम्बरः )

सर्वे देवाः सुधाकरं नाम
गवाक्षमुद्‌घाटच कस्योपरि
अनन्तामृतविततं शुभ्रमवदातम्
सुधाधवलम् आशीर्वादम्
आक्षितिजं विकरन्ति ?

सकलोन्मेषसङ्कुलनम्
सूर्यस्य मण्डलाकृतिवातायनात्
कस्यानीन्द्रियचरणे
जीवनसंवलितकञ्चनप्रसरान्
प्रणामान् समुद्भासितान्
मुहुर्मुहुः समर्पयन्ति ?

देवाधिदेवसन्देशप्रभाभासितः कोऽयम्
पञ्चःशतकोटचधिकानां जनानां
प्रत्येकस्य द्वारि द्वारि निजमलौकिकं
स्मितं सर्वेषामुपचयाय वपति ?

पथि पथि चतुष्पथे चतुष्पथे
समयस्य शिरायां शिरायां
कोऽयं परिस्फुरति ?

मानवानां कृत्स्नाभिलाषाणां मूले चूले
सोपाने सोपाने मानवं मानवं
क आह्लादयति—तेषां हृदयालवाले
जार्गतिप्रसूनानि विकचीकरोति ?

कस्तेषां परिच्छायामपि
प्रवुद्धः सन्नद्धः परिकरवुद्धोऽलङ्करोति
अद्‌भुताभूषणैः ?

क एतान् मनुष्यान् तेषां
अलौकिकप्रतिमां निर्मातुंकामः
अनुक्षणम् अद्य प्रयतमानः,

सुहृद् ! बन्धो ! तर्किका: ?
अक्षीण्युन्मील्य पश्यन्तु !

कोऽयमतिथिरद्य सुखदसर्गस्य
परमतुष्टिकरसन्धेरग्रदूतः कृतः
सन्देशवाहकः स्वीकृतः
अस्माकं सम्मुखं समुपस्थितम्
साह्लादं स्नेहपर्याकुलत्वे
नः परिष्वजति ?

तस्य स्वागतं विदधतु
अलं केनापि भ्रमेण
कयापि भ्रान्तकुण्ठया,
सन्त्रासेनापि केनाप्यलम् !

अस्य महाधिष्णतुरनुवन्धपत्रं
वारं वारं गायन्तु
तत्स्वीकुर्वन्तु,
तत्र हस्ताक्षरस्वरूपेण
हृदयं मस्तिष्कं प्रतिष्ठापयन्तु !
प्रतिजानन्तु ! प्रतिजानन्तु
पुष्पिकायां नमन्तु नमन्तु
तमनिर्वचनीयनिभं
लोकाराधनं, लोकसग्रहं
माङ्गल्यं चापि वितरन्तं
मानवाधिकारं नाम
शिवं दिक्सम् !

## ९१. चल मुदा समम्

चल मुदा समं चल मुदा समम्
प्रार्थना कथम् ? याचना कथम् ?

शूरवीरसाहसिन् !
सूर्यदेवहयरथिन् !
सत्यखड्गसार्थ ! चल !
योगक्षेमपार्थ ! चल ! ॥ १ ॥चल······कथम् ?

नूत्नविश्वकल्पना,
नूत्नराष्ट्रभावना,
विश्वशान्तिसाधना,
यस्य लक्ष्यघोषणा,
सत्यखड्गसार्थ ! चल !
योगक्षेमपार्थ ! चल ! ॥ २ ॥

नूत्नरामगर्जना,
नूत्नख्रीष्टसर्जना,
सर्वधर्मरञ्जना,
यस्य लक्ष्यघोषणा,
न्यायवर्त्मसार्थ ! चल !
योगक्षेमपार्थ ! चल ! ॥ ३ ॥ चल······कथम् ?

रोगशोकभञ्जना,
विघ्नभीतिगञ्जना,
शकुनपक्षिखञ्जना,
यस्य लक्ष्यघोषणा,
बुद्धशुद्धसार्थ ! चल !
योगक्षेमपार्थ ! चल ! ॥ ४ ॥ चल···कथम् ?

रुद्धयुद्धयोजना,
न परमाणुजल्पना,
नाणुशक्तिवर्द्धना,
यस्य लक्ष्यघोषणा,
पञ्चशीलसार्थ ! चल !
योगक्षेमपार्थ ! चल ! ॥ ५ ॥

सकलजनसुचन्दना,
तूर्यनादबृंहणा,
शुभ्रशक्तिवन्दना,
यस्य लक्ष्यघोषणा
साम्यसन्धिसार्थ ! चल !
योगक्षेमपार्थ ! चल ! ॥ ६ ॥ चल······कथम् ?

उचितकार्यनोदना,
उचितसूत्रशोभना,
हिस्रदृष्टिवारणा,
यस्य लक्ष्यघोषणा,
उचितमार्गसार्थ ! चल !
योगक्षेमपार्थ ! चल ! ॥ ७ ॥ चल ······कथम् ?

चल मुदा समं चल सदा समम्
प्रार्थना कथं ? याचना कथम् ?

## ९२. धूलिसरितावार्ताहरात्सहकारात्

शाकवणिगापणात् खञ्जामहत्त्वाकाङ्क्षा
मिष्टान्नविपणिसकाशाल्लुञ्जा लालसा
वस्त्रावारीनिःसृता परिणयाल्पना
पदद्वयं प्रक्रमत्रयं गत्वा
धूलिसरितायां निमज्जिताः,

श्वासावरोधात् समुच्छ्वासात्
तरन्त्यो धूमिलतातरङ्गेषु
जराजीर्णकूपस्य तर्जनीसमीपे
फलोद्यानस्य निर्विण्णतालिन्दाङ्घ्रित्राणसकाशे
धूलिधूसरितकेशाः
गोधूमकलायचणकवाणीप्रसरे
क्लान्तपान्थत्रिशूलविलोलजिह्वशिवालयान्तिके
आविलवेशा अवतीर्णाः,
भयार्तं रेणुस्नातं मन्दिरम्
महादेवप्रतिमां
परिरम्भे आदाय तया संश्लिष्टम् ।

शकटं द्विचक्रिकाट्रककारप्रभृतयोऽपि
अभिदधति दुर्योधनस्यास्थिचूर्णजङ्घामिमां
राजरथ्यां ननु राजरथ्याम् ।
इयं धूलिसरिः सङ्गमार्थम्
भगवतीभागीरथीमुपतिष्ठते
महाप्रयाणस्थलं श्मशानं संलक्ष्य,
उत्प्लुत्य पारगमनार्थं ! नौकारोहणार्थं वा !
निवर्तनीयं ! निवर्तनीयमतः पृष्ठतः ।

पूर्वं खल्वासीद् रेणुचक्रवाते
काचित् पर्णशाला ।
समासादिता समासादिता
चमरु चौरासियावृद्धस्येयं पर्णशाला ।

अत्रेयं ग्रामदेवता
वनस्पतिमाता
असौ तरुणो वटदेवः
ताम्बूलं निषेवन्ते ।

धूलिसरितेयं सदा तृषार्ता,
शरवणे कुशगुल्मसघनमर्मररत्ने
कुल्यां सङ्क्रम्य पिवति ऊर्मीः
तासां सम्पुटे सलिलं मधुरम् ।

ज्वालावाते भीमनिदाघे
हरहरायते धूलिसरिरेषा,
घर्मार्तो बिभेति
शुष्के पङ्काविलपल्वले
एकतालीताले कषायितगुर्जररागे
मृगतृष्णारासपालितः
मदीयः 'सोनहुला' इत्याख्यातो ग्रामः
आनन्दकानने कलधौतनगरार्थमिथ्यावाची ।
प्रश्नसमेधितप्राची !
निरुत्तरासौ 'कालीमाई' स्थाने कथं
योजनापत्राणि हस्तामलकवत् कृत्वावाची ।

## ९३. इत्थं शाश्वतिकम्

सिंहासनाधिष्ठित:
आसन्दीस्थित:
भूमेरुपरि शयानो विलुण्ठित:
बुद्धिसागरे सन्तरन्
निमज्जितो वा
शैलशिखरे
प्रकृतजनानाह्वयन् वा
गहनकान्तारे किङ्कर्तव्यविमूढो वा
सङ्कुले क्षुब्धस्तृप्त:
क्षुत्क्षामकण्ठो वा,

समर्पितविजनवल्लरीसुन्दरीरूप:
एकान्तोच्चावचश्चस्यास्त्वं,
गर्वोद्धतनास्तिक !
जगन्नियन्तु: सन्तते !
तव गहनान्तराले
सर्वदैव बालक:
कश्चिद् विद्यमान:
खलु रोदिति हसति च ।
प्रतिबिम्बबाधितं
शून्यान्तरालसाधितं
दर्पणं जानाति
इत्थं शाश्वतिकम् ?

## ९४. भविष्यं भणति

मृत्तिकाभित्तयो दिवङ्गता,
पाषाणभित्तयः कालेन पूर्व कवलिता,
लौहप्राचीरा भूलुण्ठिता
प्रोज्झितादृष्टहस्तैः ।

क्षितिजं मारकतद्युत्येतद्
आलोकटङ्कितं निमन्त्रणम् ।

अग्रगामित्वाय प्रशस्तवर्त्मनो
देवतानां हरितवैजयन्ती स्फुरन्ती···
······दृश्यते······दरीदृश्यते··· ।

दूरवीक्षणतालानां प्रतिवेदनानि
अणुवीक्षणयन्त्राणां स्वगतकथनानि
दर्पणानां स्वरूपटिप्पणानि·
सर्वाणि याचकाग्यत्रोपन्यस्तानि ।

'चरैवेतिगानम्' इत्यग्रस्य प्रत्यग्रस्य ध्यानम्
कोलाहलाह्वानस्य
विकाससंहितायाश्च मानम् ।
हृद्धमनं सञ्चरणं ननु परिव्रजनम्
अखिलाद्यां सत्तायाम् अमृतत्वाय कल्पनम् ।

## ९५. अद्यत्वेऽपि ऋतुविपर्ययः ?

अक्षांशलेखैश्चोत्तानदेशान्तरोर्मिभिः
ऋज्वायताभिः कालान्तराभिश्च
वेलानिलैश्चञ्चज्जलैश्च
उत्साहसम्पन्नसर्वस्थलैश्च
सप्तमहाद्वीपयूथस्य
सप्तसागरसन्दोहस्य
सरलकुटिलसीमाभ्रूभङ्गैः
परिलेखनगणितकारैश्च
कागदस्य ह्रस्वहृदये
समाहिता—समवेता
एकीकृता वसुन्धरेयम् ।

कथमेष ऋतुविपर्ययः
यन्मानवस्य
विशालसीमाविरहिते
हृदये मस्तिष्के च
नैकीकृता नैकसंयोजिता
क्षमेयं महाविभुना
दुर्ललिता
नीहारत्विषामृतसङ्कुलेन
सर्वं परिष्वजता विहायसा ।

## ९६. अनुल्लङ्घनीयो व्यतोपातः

नतोन्नतक्षमाया नैष वैषम्यप्रसरः
न शैलाधिपस्य परिसरः
न विन्ध्याटवी दुरन्तपूरा
एते लङ्घिताः,
एतस्यां धरण्यां
मानवानां स्रष्टृ-सुवनानां पदार्पणस्य
दरीदर्शनम् ।

अन्यः कश्चिदेष शरत्सम्पातः
शिशिरसम्पातः, मधुमयसम्पातः
विचित्रज्योतिर्वलना
गणिताद्भुतकलना
ग्रहनक्षत्राणां सङ्क्रान्तिचलना
चक्रवातप्रतिचक्रवातकरणा,
रहस्याज्ञेयव्यतीपातः
एतादृशोऽनन्तनागस्य कुण्डलीखातः
यदनुल्लङ्घनीयः
सर्वः सञ्जातः ।

चित्रार्पिता गतिः
चित्रार्पिता आयासाः
पाषाणीप्रतिमा सेयमाशा ।

## ९७. वितथा प्रणतिरेषा

ऋतौ च ऋतौ च
सरलहृदयं पुष्पमेतत्
स्वगृहे, प्राङ्गणे, स्वदेहल्यां
स्वाधारस्तम्भे वेपमानं
निजोत्सेधे, परिसरे
मधुगन्धाञ्जलिं शिरसा करोति ।

कण्टकमुत्सेकिनं
तथैव चापि प्रतिष्ठापयति
स्वस्कन्धेऽभेदम्
साक्षिरवितमक्षं
मिषतश्चन्द्रस्य
गगनतिलकस्य,
आलोकस्य मौनझञ्झायां
खपरागस्य निःस्वननिशामन्त्रपाठस्य काले ।

शीलविपर्ययमयो
गर्वोद्धतः कुन्तकानुजः
एकेनापि मृदुनाशीर्वचसा
नाभिनन्दयति, न प्रोत्साहयति
किञ्चित्क्षणं, किञ्चित्कणं
ह्रस्वतरं, महत्तरं च
खल्वेषः कण्टकः ।

## ९८. सम्प्रति यत्साम्प्रतम्

परम ऋजुरेषो राजपथः ।
रविदुहितोन्मुक्तविभा
सहगामिनी कुरुते 'बाढं, बाढम्' ।
'सार्थे बहवः सततवयस्याः'
नेदं चोपदिशति सुमनः सुमनः ।
शुद्धान्तःकरणं गगनं
पठति च सर्ददशस्तोत्रम् ।

मानसराज ! प्रथितनीरक्षीरविवेकि ! पक्षि !
तत्किं तत्किं वद वास्तवं वद
वारं वारं त्वमुत्पथः सञ्जातः ।
दूरं लक्ष्यं, विप्रलम्भा विप्रलम्बा यात्रा ।
तदपि च द्विजबालकमिव क्रीडनका कर्षन्ति
प्रसह्यं त्वाम् ।
न कोऽपि समर्थस्तवागमनार्थम् ।
सम्प्रति तु साम्प्रतमवगमय त्वं स्वम् ।

## ९९. श्रवणा शृणोतु !

गुर्जररागे एकतालीताले अष्टपदी ध्रुवपदे

सागर-हृदये नीलसमुदये
सुरपतिहासविलासे
वर्षाकन्या जाता धन्या
श्यामवलाहकरासे ॥ १ ॥

चञ्चलचरणा काञ्चनरशना
यामालालितशोभा
वासरभानैर्यौवनमानैः
उपचितनवरुचिराभा ॥ २ ॥

मञ्जुवयस्या मण्डितशस्या
स्वप्नसमेधितधरणी,
प्लावनमाला सरितावाला
तीरे वेल्लति तरुणी ॥ ३ ॥

आशाहासाः दूर्वाघासाः
कुशगणपङ्क्तिः श्यामा,
तरुवरनिकरो वार्ताचतुरो,
मरकतहसिता रामा ॥ ४ ॥

नीलं गगनं तर्णि तरुणम्
हिमकरराकातारा:
पश्यति सकलं क्षितिजं विमलम्
तेषां प्रावृट्-कारा: ॥ ५ ॥

पवनविरचितः कोणो रुचिरः
तन्तुनिभा मिहनालाः
वारिदवीणां मुखरितमीडाम्
वादयते घनवाला ॥ ६ ॥

## १००. वीप्सा

मन एतद्वेणुवने, वानीरक्रमे
सङ्कुलचत्वरे, तुमुलारावे शिञ्जनपिहिते
विपणिनिषद्ये रूपोपवने
हासपरिहासाभ्रंलिह्कुट्टिमे
भ्रमति च भ्रमति च ।

मस्तिष्कं तर्कमुपस्थापयति
प्रस्थापयति च, गणितम्,
सङ्गणकश्च हस्तामलकवत्कृत्वा
वदति संवदति च ।
हृदयं मृणालमुल्लिखति
कुलिशमनुवदति,
निगूढारावः कर्णकुहरे
मूकमूकः स्वनति च ।
घट्टो नौकां प्रति
ऊर्मिलविवर्ते भणति च भणति च
वोहित्थं सागराद् बिभेति च बिभेति च ।
वर्णानां पातालभैरवी स्फुरितालक्तकरञ्जिताधरेण
सम्मोहनं करोति करोति च ।
दिवाङ्कस्य तारुण्यं आलोकातिशयं दृष्टिप्रतिहन्तारं
वमति च वमति च ।
कलखान्त्यानुप्रासाद्वाभा खलु अहरहः
होलिकारागरङ्गान् वर्षति च वर्षति च ।
अनुधावनमेतद् गतानुगतिका सरणिः
विरम्याश्वत्थाधो बीजनिर्वाणं
रथरथ्या वल्गारोपः
जले स्थले नभसि चाद्भुततरणिः ।
वीप्सा सर्वा भणति च दिशति च
सागरसरितातीरं ह्याह्वयति
कच्छकर्दमः परिष्वजति परिष्वजति च ।

## १०१. अपवर्गस्योपरि

दान ! त्वं प्रतिदानं किमिच्छसि ?
त्वं कोटिस्रोतः कोटिचरणं
सहस्रबाहु सहस्राक्षम्
अपवर्गस्योपरि
परमविभस्य हृदये तवास्थितिः,
तस्य मस्तिष्के शुभ्रवस्तुनि तवोन्मेषः ।

मिपतानेव मानवानां
नित्यमनन्ततां याति
तव काञ्चनी सम्पत् ।
सृष्टिरेषापि हे आद्यन्तहीन
आत्मदान !
तवैव महावदानम् ।
'दयध्वं' 'दम्यत' 'दम्यत'
तवैव स्वरूपकथनम्
तवैवोदात्ततमा प्रक्रिया
आलोकाप्लावनम् ।

हृदयदानं कश्चिद्
अभिधानहीनो लोकोत्तरानन्दः ।
प्राणदानं विवृत्या
निर्वाणाय कल्पते ।

## १०२. नहि प्रतिकारेणालम्

वलादधिकृतेऽक्षिणी इमे ।
त्वया दुर्धर्ष दृग्गोचरावरोध:
सततं कृत:
मृपैव स्वाती विभाति ते
चपलागति: ।

न प्रयास्यसि यदि त्वं
नि:शब्दार्थगवी-विस्मरणपदवीम्
अद्यत्वेऽपि
स्वश्वासोच्छ्वासेष्टकलोकम्पृणा-वज्रलेपै:
स्वहृदय एव कारां निर्माय
त्वां श्वाश्वतं कारयामि
तत्कारावन्धनस्थम् ।

रूपजाले निक्षिप्तो
विवशो वराकोऽप्येष
जन: सायासं
प्रतिकाराय प्रभूतं
कर्तुमुत्सहते
शक्नोति च ।

## १०३. विकसति मुकुलम्

'केवलं त्वमेव जानासि
त्वमेव परिचिनोसि माम्'
इति त्वमहं मन्यसे ।
'प्रकेत-शेखर ! सम्यगवलोकय
अस्मिन् मार्गे, तस्मिन् पथि
सुदूरे एतस्मिन् चतुष्पथे
त्रिपणौ निपद्यायां, वसतौ
आदिवासिनामुटजे प्रत्येकनामपट्टे
कान्तारप्रसरे, शैलप्रसरे,
उपत्यकाधित्यकोपचयापचयो-
र्ममैवाभिधानमालिखितम्
अत्र प्रच्छन्नैरुष्मावरक्तकिरणै-
रुत्तुङ्गतायां ब्रह्माण्डकिरणै-
स्तत्र नानाविधविद्युच्चुम्बकत्वविकिरणै-
स्त्वेषति ।'
शब्दादीनां जन्मकाले क्षमावतारे सूर्यरश्मिसंलापे
कौमुदीमहोत्सवे चेदं तु पूर्वमेव प्रतिनिविष्टम् ।

## १०४. विद्युत्तन्तोर्द्रवणम्

गृहप्राङ्गणे मञ्जरितसहकारशाखायाम्
आस्थितौ परस्परं चुम्बन्तौ परिष्वजन्तौ
शुकीशुकौ सहसा रहसि
लोष्ट्रनिपातेन प्रहर्षेऽववाधितौ ।

सन्दर्भेण व्याकुलितः शुक इत्थं
विगतदुर्घटनोदन्तं वर्णयति—

'अस्मिन् गृहे ह्यः
अस्माकं गृहस्वामी स्वप्रेमिकां चुम्बतिस्म
'कृतपरिरम्भ सुधारसपानं' मन्दं मन्दं गायतिस्म ।
सोऽपि सहसा इत्थमेवाववाधितः केनचित्,
प्रणयद्रविताया वियुक्तः ।

तदैव भवने तस्मिन्
सर्वं विद्युत्तन्त्रं विघटितम्—
विद्युत्तन्त्रे विद्युत्तन्तुः ( फ्यूजतारः )
क्वथनाकं सम्प्राप्तः, द्रवितो विलुप्तः ।
तदाप्रभृति अत्र सर्वत्र तमोराज्यम् ।

## १०५. मध्याह्ने वितते तमिस्रा-स्कन्धावारे

आशाया रसनां सृक्कणीम्
परिलेलिहानो मूकस्त्वम् ?
अनामन् !
अभ्यर्थयसे त्वं मृगमरीचिकाम्
कस्य सैकतनिर्जनोद्भ्रान्तस्य ?

नेत्रे नेत्रे कालानुस्वारा
दृष्टौ दृष्टौ विसर्गा
धमन्ति रक्तालोकशङ्खान्
तुमुलतिमिरशव्दचूर्णं विवर्णं किरन्तः ।

क्षणमवतिष्ठस्व
विहायसा गच्छन् बन्धुवर्य !
चपलया चोरितं शक्रास्त्रं खस्वस्तिक-सर्वस्वम्,
स्वर्ण-शृङ्खलया निगडिते शून्य-वर्त्मनि

कालायसेनविद्धे ।
निःस्वनतानुगुञ्जितं गीतीनाम्
रागलययतिसुरभितम्
निशीथनयनोन्मीलिता यूथिकेव ।
ललाट-संसक्ताः प्रस्विन्नाः सङ्घर्षाः
वाचाला द्वन्द्वमुखराः सन्दर्भाः ।

अङ्गारोल्वणानि प्रश्नचिह्नानि
क्षितिज-वैदग्ध्ये हरितव्यपदेशे
समुदयन्ति-स्वप्नायन्ते-विन्दूयन्ते,
तदपि अयि व्यष्टेः समष्टेः
सुप्रियाभिधान ?

कं किमभीक्ष्णं याचसे त्वम् ?
मध्याह्ने वितते तमिस्रास्कन्धावारे
'युद्धं देहि'
विहायेति गायत्रीमन्त्रम् ।

## १०६. मृग्यमाणे मधुच्छाये !

मृग्यमाणे मधुच्छाये ।
दुर्ललिते मानसि !
स्वागतं, स्वागतम् !
दर्शनं नाभ्युपैसि ! दर्शनं नाभ्युपैसि !

अवतंसोन्मेषा क्वणितरशना स्वप्नसंसृतिः,
वंशिकावादकश्चुम्बनावतारः,
आश्लेषाः स्मेरानना उड्डीयमाना
विरावमधुराः पिबन्ति पीयूषपङ्क्तीः शुकसप्तते: ।

ऊर्मयस्तृपार्ता वलाहकाधिरूढाः ।
दधिसुतस्य परिकल्पनेयं मुक्ता
तस्यां दिग्भ्रान्ताविलुप्ता
जीवनं याचमाना सागरा जीवनेशाः ।

बहुवीप्सायामाकाशभाषितं
सुगन्धसंलापे
कस्या आह्वयति मकरन्दविग्रहम् ?

प्राणा व्याकुलाः समीरे प्राणवन्तो
वहिश्चरन्तः सुधां सम्भरन्त्युच्छ्वासे ।
प्रियासायुज्यत्वाच्छून्यमिदं
ममातिथेयं दुर्ललिता मानसीव
वञ्चयते माम् ।

मृगतृष्णाया अपाङ्गयोः शुष्के कज्जले
काचनेयं सम्पुटयति नीहारार्द्रां राकाम् ।

किशलयकोमलकिरणकिशोरीकौशेये
पुष्पाञ्चलप्रान्तरे
किञ्चिन्निगूढाननश्चपलमाधवो
दर्शयत्यधरं मां कथमुपहासे ?
भुजबन्धस्य रिक्ते ! दुर्ललिते मानसि !
मा द्विष्यास्त्वं स्वागतं गीयमानं,
मञ्जरीपरिरम्भमुकुले मधुलिहश्च ।

मा द्विष्यास्तथा
फुल्लसर्षपशिबिकारूढस्या आलोकाप्सरसः
पवनं प्रति प्रेङ्खितानि सम्मोहनानि
पीताम्बराणि मसृणानि प्रणयेङ्गितानि ।
मान्यथा मृल्लीयाः
कलकण्ठस्य छवेर्वाचोपगूहनम् ।

## १०७. वेगविस्फूर्जथुः

प्रयाणपटहघोषकाः !
प्रबोधतूर्यनादकाः ?
अनन्तसूर्यभासकाः !
उदग्रवीरसैनिकाः ॥ १ ॥

इयं प्रचण्डकालिका,
करालजिह्वलोलिका,
तमिस्रदनुजहोलिका,
त्रिलोकशङ्खवादिका ॥ २ ॥

रणे हि वोऽस्ति मातृका
अजस्रसिद्धिसाधिका
समस्तविघ्नबाधिका
रणे हि वोऽस्ति तारिका ॥ ३ ॥

अरातिशस्त्रभञ्जिका
अरातिवेगगञ्जिका
प्रवातवह्निमर्दिका
सदास्तु सौख्यकारिका ॥ ४ ॥

करालमुण्डमालिनः
प्रदाहनृत्यकारिणः
शिवः शिवं पिनाकिनः
सदा ददातु शूलिनः ॥ ५ ॥

प्रयान्तु शौर्यशालिनः
नदन्तु रुद्रसेकिनः
रणे स्वरक्तमेधिनः
भवन्तु विजयशालिनः ॥ ६ ॥

## १०८. अद्य अवाक्, श्वोऽवाक्

परमाणुरेकः कश्चिदादर्शानाम्
तस्योपरि सन्धूयमानः कोलाहलो
धूमधूमः स्वभुजसु प्रकाशवर्षाणि
परिरम्भे समस्यन् मुकुलयन्;
धूमोपरि आमूलचूलं हिमीभूतो हिमालयः ।
हिमालयस्य गजदन्तेऽष्टादशाक्षौहिणीसेना ।
वव्बूलस्य स्कन्धे—वाहौ ते ( सर्वे )
कृत्रिमप्रभातस्य सूर्यमधिक्षिप्य प्रस्थाप्य
वव्बूलाधःस्थितान् विस्मयविस्फारितनेत्रानूचुः
अपि पश्यथ !
विश्वशान्तेरियं चारुतमा
प्रतिमा
तस्या अपूर्वं स्वरूपम्;
संवादपत्रस्य कश्चिद् यायावरविन्दुः
निगलतिस्म सर्वां सन्दृष्टिम् !

## १०९. किञ्चनहस्तलाघवम्

एतेषु नयनेषु किञ्चिदभ्युपागतम्
किञ्चिद् बलादाच्छन्नं वरीव्याप्तम् ।
तत् किञ्चिद् इमानि पुस्तकानि,
इयं रेडियमघटी,
गवाक्षा एते इमे
इमानि वातायनानि
इमाः द्वारः
निष्क्राम्य दूरे क्षिपन्ति
कुमुदकौमुदीसंवलितायाः
सरितः परे तीरे ।

परन्तु तत् किञ्चित्
पुनः नेत्रेषु यथातथं निवर्तयति ।
तत् किञ्चिन्न केवलं यथापूर्वमेव
अतो नितरामुच्चरितं
जाज्वल्यमानं पृथुलोत्कीर्णं
तारामण्डलेषु कनीनिकासु
निविडाच्छन्नं
निर्निमेषत्वं सञ्जनयति ।

## ११०. अनावृतं द्वारं देहि—पूजास्थानान्वेषणम्

'ह्यो' नाम खलु यो देवः
स पाषाणभूतः प्रक्षिप्तः प्रपाते ।
संयाने कालयाने तिरोहितः ।
'श्वो'ऽभिधेयो देवराट्
गहने कान्तारे, उपत्यकायां च
अधित्यकायां च, कादम्बिनी-परिष्वजने
जिह्म-हिमानी-हिमस्रथे भ्रमति सरति च,
शून्यमनुधावश्च धमति च,
उडुपं, प्रवहणं रथं वा मृग्यति ।
'अद्य' हि खल्वेष ईश्वरः सर्वेश्वरः
साक्षाद् द्वारि, मन्दिरे च समुपस्थितः
आराधनार्हः सपर्यार्हः शङ्करः
पूजां प्रणतिं रक्तस्फुरितं
चेष्टाफुल्लं नैवद्यमपेक्षते ।
उपवन उपवने प्रत्यभिज्ञा विकसति,
शिखरे शिखरे आलोकानुज्ञा विलसति ।

## १११. दश वक्त्राणि—दशानामाननानां समाहारः

खल्वेष हरिश्चन्द्रः सौधस्य विमानमारुह्य
तारस्वरेण घोषयति—सत्यमेव जयते, नानृतम् ।
दुर्योधनो वा एष ब्रूते सत्यपरिरक्षणं बालिशत्वम् ।
श्रूयतां गर्जत्येष भीमः
'सञ्चूर्णयामि गदया न सुयोधनोरू' ।
विहरन्नेष शकुनिरिन्द्रस्य सेतौ
अतिशयोक्तिपुष्पावचयं
कुर्वन् दरीदृश्यते ।
प्रावृषं विना घर्मदीप्ते नृत्यति
मयूरोऽसौ ऋतुविपर्यये ।
फूत्करोति सर्पो ननु तक्षकभ्राता
इतस्ततः परिभ्रमन् ।
रसालशाखावतीर्णो मधु वर्षति
कलकण्ठोऽद्भुतः प्रच्छन्नाध्यासः ।
नीरक्षीरविवेकविचक्षणो राजहंसो
नदति सम्मुखं साक्षात् ।
असौ एष मर्यादापुरुषोत्तमः
प्रतिजानाति—'रामो द्विर्नाभिभाषते ।
शुकदेवमुनिरयं वा जन्मजातविश्रुतः
आदर्शसाधकः संन्यासी ।
दश वक्त्राणि नन्वेतानि कस्य ?
कोऽयं परिचीयते ?
दशाननोऽयम् एकाभिधानः
दशनामधेयो वा कश्चिदद्भुतः
छलनाकलितः पुरुषः ।
कोलाहलं मा कुरु ! मा कुरु !
दशवक्त्राणां समाहारो वा ।
पिधानं ! पिधानं !
पिधानप्राविधानम् !

## ११२. अमृतत्वाय तिमिरावचयः

गौरी न हि महेशानी
कथमूर्वशी च रूपशाणी ?
युगपत् स्मिताच्चयवन्ते यूथिकामल्लिका पाटलारविन्दकुसुमानि
वन उपवने द्वारि द्वारि हासात्तथैव मुक्ताफलानि ।
कन्यका बालेयमप्सराः
शाद्वले, शैले, सङ्कुले, वानीरवने, निषद्ये गत्वरा,
बोधिवृक्षरसाल-बब्बूल-खदिरनागफणानामधः
स्वपिटकं निधाय करोति तिमिरावचयम् ।
पथि च खाते च तस्याः समं
मौनोपचयम् ।
पृच्छमधूकं केयम् ?
सुवर्णक्षीरी, सप्तपर्णश्चलदलश्च
परिचिन्वन्ति तां
सुन्दरीं सुकुमारिकां सुपुमितां
शिवस्य मस्तकालङ्कारोद्भवेयं
तिमिरावचयं करोति
उड्डीयमानेन कैलासेन मानसरोवरेण च सह
आह्लादाङ्गने
आलोडनविलोडनपर्याकुलताजमहलस्कन्धानारुह्य
अत्रागता सुधाकरस्य
आलोककौशेयकञ्चुकी
अमृताभियाननिरता
कामधेनुदर्पणा
सुधेयम्
निरक्षरा पवनसम्पृक्ता बहुविधगीतिकेयम् ।

## ११३. मीनमेषम्

मीनमेष ! मीनमेष !
गृहाण राजमुकुटं, शाश्वतं ते राजमुकुटम् ।
मीनमेष ! मीनमेष ! स्वागतं ! ते स्वागतम् ।
लोचनाभ्यां किमुत कोश आम्,
खलु विकास आम्,
वेश्मनि त्वं वर्त्मनि त्वम्
सम्बलं पाथेयनाम काञ्चनम्,
शाश्वतं हि गत्वराणां धर्मशाला,
सम्पराये जित्वराणां पर्णशाला
मीनमेष ! मीनमेष ! स्वागतं ! ते स्वागतम् ।
सार्थे सार्धं पार्थकेशवौ,
एकले सहगामिनः सहायकः ।
ज्योतिरिङ्गण ! ज्योतिरिङ्गण !
अंशुकोशकमंशुकोशकनामधेयं
कुर्वते जनाः ।
स्वागतं ते स्वागतं च कुर्वते
सुधीयशोधनाः ।

## ११४. समानधर्मणां वंशावलिः

पुरा किल बभूवतुः
आदिमनोर्द्वौ तनयौ
ईश्वरः स्यात् तत्पूर्व
ईश्वरा परा कापि वा ।
जिजीविषाक्षमायाम्,
सहकारस्य शाखायाम्,
एकज्येष्ठस्तनयो ब्रूते—बहिः साम्यवादः
अन्तः साम्यवादः
अन्तर्वहिश्च समानम्,
तद्विपुलाद्विपुलस्य जिजीविषाप्रणिधानम् ।
अपरः कनीयान् सुनूरवादीत्—
बन्धो ! सम्यक् प्राप्तम्,
सम्यग् भणितम् ।
काञ्चने च सदा मृत्तिकाभावे च
वसौ वसुमत्याञ्च
बन्धुश्च बन्धुश्च सर्वः समानः
एकैकस्य भागः समानः ।
साम्यवादस्य बन्धुद्वयस्याऽपि
वंशावलिश्च समाना,
समा हि भवन्तु मनुष्या भविष्यद्विधानाः
निजो वा परो वा बहिश्चान्तरेऽपि
सर्वे हि सन्दर्भाभिलाषे
उक्तौ च कार्ये तथा ।
अग्रे च पृष्ठे च
इतो वा ततो वा
मानसे च शरीराद् बहिर्वा
सङ्कल्पे च भावोऽपि सर्वत्र
बन्धुश्च बन्धुश्च सर्वेऽपि
कृत्स्नं समानाः ।

## ११५. परिवेशोप्तं बन्ध्यत्वम्

कस्यचिद्राक्षसस्यास्थिचूर्णानि
अत्र विकीर्णानि
भस्मासुरस्य वृत्रासुरस्य शरीरनिर्मोकः
प्रसृतः ।
नैराश्यमवसादो विषादश्च
साकाराः उदाहृताः ।
केन सम्राजेन शाद्वलमतो भूतभूतव्यपदेशेन
निर्वासितम् ।
कस्य महर्षेरिदं हृदयं प्रतीक्षते मोक्षारामं
व्रणाहतम् ।
रसालकुञ्जे सकाशे च वसन्तः कुसुमायुधो
हरितप्रकोष्ठे बालघनश्यामः
उपहसति सीमान्तं मर्माहतम् ।
स्मारं स्मारं द्रवति हृदयं केन निदाघेन
कया शरदा उपप्लवप्लुतया प्रावृषा
अत्रोप्तं बन्ध्यत्वम् ।
इदं कृतं क्लिन्नं जीवनधाराभिर्मुहुर्मुहुः
परिदेवनेन रुदितेन ।
क्षीरसागरस्य विपुलधवलत्वं
कर्पूरगौरस्याशुतोषस्य
परित्यक्तं प्रक्षिप्तं कर्पूरत्वम् ।
किमेतन् नाह्वयति
स्फुरणमङ्कुरणञ्च,
पुष्पफलोद्गमञ्च ।
प्रयास वृथात्व ! सङ्कल्प-बन्ध्यत्व ! सौभाग्यप्रतिबन्धा !
प्रकृतिनिहत शस्यशष्पोषित ऊषर ! वेदस्य ईरिण !
उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत !

## ११६. प्रसूनस्यास्य भवतैव नामकरणं क्रियताम्

पश्यतु विमलं कुसुमं विकचम्
ननु नारामे न वने ।
खल्वष्टदलं शिवसुरभिकलम्,
दृष्टं सङ्कुलसघने ।
प्रतिभाविकिरः प्रथमो मिहिरः
तर्कसनातननामा ।
पुनरपि चन्द्रः प्रतिपद्वन्द्यः
ख्यातविवेकसुधामा ।
एका तारा जगतीसारा
बुद्धिश्च तदभिधानम् ।
दिविनीहारा ज्योतिर्धारा
अन्तरात्मा हि मानम् ।
ध्रुव आख्यातः पुनरायातः
सत्यं चेति प्रोक्तम्
अपि नक्षत्रं ज्योतिर्वक्त्रम्
न्यायं खलु साधूक्तम् ।
विधमद्हिंसा तरलव्यंसा
सुरसरिरेषा तुङ्गे ।
सुखहितसारः परोपकारः
प्रत्यूषो दिनरङ्गे ।
दलसंख्यानम् एतज्ज्ञानम् ।
एतत्पुष्पविवरणम् ।
अथ किं तत्किं पुष्पं तत्किम्
इच्छतु संज्ञाकरणम् ।
फुल्लं श्रेष्ठं जगतिप्रेष्ठम् ।
औचित्यं व्याहरणम् ।

## ११७. अनुकम्पाधेयापि

कुसुमाकरेणोपायनं प्रेषितम्,
ऋतुभिर्ऋषिभिश्चानुमोदितम्,
यत्र तत्र सर्वत्र वाणीस्मेरा
भूयसा स्वस्तिवचसाभिनन्दिता
प्रार्थना शैले-शैले खाते-खाते
गह्वरे-गह्वरे, समे, विषमे, सलिले
भूमौ, विहायसि, नक्षत्रप्रस्तावनायाम्
उदीयमानायां मार्तण्डोपसंहारे
हसति, विहसति, विलसति च ।
अनुशासनम्, औचित्यसूत्राणि
साम्यगीतकानि, साम्यशुभाशंसनानि
भाषन्ते, भाषन्ते च
सरस्वतीमुखरा, उमाशक्तिविभूतिसक्ता
रमारामणीयकावयवा विश्वशान्तिर्नाम
देवदूती प्रयासायासेन समाहूता, समागता
चिरमाराधिता वन्दिता—
जानन्तु मनांसि, हृदयानि, मस्तिष्कानि,
ज्ञानं च, कर्म च, भक्तिश्च
श्रद्धा चास्था, विश्रम्भो विश्वासश्च,
प्रगतिप्रत्यया धर्मार्थचतुष्कन्धोपसर्गाः ।
अनुकम्पाधेयापि नन्वसौ
विश्वशान्तिर्ब्रह्माण्डस्वीकृतिः ।
मन्ये पवनव्याप्तेः पूज्यत्वं
सपर्यत्वमर्चनत्वम् ।
रक्तकोशकोशे, जडत्वे च
वसतु हे विश्वब्रह्माण्डभाग्यलक्ष्मी ।
ॐ विश्वशान्तिः, विश्वशान्तिः
विश्वशान्तिः विश्वशान्तिः ।

## ११८. सहकारसोपानं—सङ्कोचगणितम्

हस्तो निभालयते निमीलिते लोचने
चरण: क्षितिजं निजाधस्तात्स्वमाने
इच्छत्यूपगूहितुम् ।
हस्तयोश्चरणयो: प्रसारणस्य
नास्त्यवकाशो नास्ति स्थानम् ।
उत्थितश्चास्थितो विग्रहानुबन्धो हि नूनं
लक्षयत्यभावो नितरां स्थानस्य ।
शयानस्य शयनाय भूमिरल्पीयसी सञ्जायते ।
शीते भीते चिबुकसमर्चाजानुर्ननु कुरुते कार्यम् ।
तत्किं वर्ष: ? तत्किं नीवृत् ?
तत्किं सागररशना पृथ्वी ?
एके हस्ते याति च रजनी,
एकहस्ते याति च दिवस:,
एष: खलु संङ्कोचसग्रह:
ईप्सितोत्तमलोकसङ्ग्रह:—
अनर्घ्यं श्रेष्ठं सुखकरं ग्रहगणितम् ।

## ११९. अङ्गरक्षा—इयमेषा भवतः

इयमेषा—अङ्गरक्षा
भवतो विद्यते सम्मुखं सकाशमेव ।
पूर्वकल्पितमपि सौचिकशिल्पोपायनम्
एतच्चारुतरमचारुतरं वा प्रियं वा प्रियं वा ।
गृह्णातु नूनमेतामङ्गरक्षाम् ।
धारयतु ।
शिशिरक्रोधाद्, रक्ताक्तातपवातात्
पांसुलवातावरणान्, नग्नज्वालाभ्यः
विवस्त्रहानेराक्रमणाद् एषा शरीरं रक्षिष्यति ।
ऊतास्यूता बहुभिः परिकल्पिता
अङ्गरक्षैषा खल्वास्तिक्योपनीता
आस्थाकौमुदी नाम ।
सुपुष्टसूत्रसंवृतिरेषा प्रियदर्शना
शोभना विवृतिर्नावधीरणीया
हितावहावधारणीया प्रत्युत ।
गृह्णातु ! अङ्गरक्षामेतां स्वकीयाम् ।
धारयतु सत्यशिवसुन्दरबोधिकां
लक्ष्मीम्,
प्राप्ते तु शुकदेवत्वे
एषापासितुं शक्यते नूनं यथाभिलषितम् ।

## १२०. किमिदं मौनं, क एष कोलाहलः

हिमालये देवदारुशाखाप्रशाखायां
किमन्वेषणेनापरिग्रहद्विजस्य
परिग्रहश्येनस्य तथा ।
तत्परिभाषाविरुतं भाषारावो वा
प्रवहति निनदति च सरितासु हिमानीषु
शर्करिले पथि, प्रस्तरशकलशकलसङ्कुले
सैकताङ्कपाल्यां वा शुष्कायां सञ्जातायाम् ।
छिद्यतां विमर्शपद्धतिरेषा ।
सूर्यश्च चन्द्रश्च तथाविधभ्रातरश्चोत्पादयन्ति
अर्जन्ति, अभिवर्षन्ति खलु
अन्ये ग्रहाः नक्षत्राणि, पिण्डाः
प्रतिमानं दृष्टान्तं कृत्वा दिवाकरं सुधाकरं वा
अनुसरन्ति ।
सर्वा गगनस्योत्तुङ्गता तस्य प्रसराः
तदेव निदर्शयन्ति, प्रचारयन्ति
दिशि दिशि कोणे कोणे प्रतिनिवेशयन्ति,
योगक्षेमपरिवेशा इदमेव व्याहरन्ति
सर्वेषां संसृतिसरस्वती चतुर्वाक्प्रमा
भूतवर्तमानभविष्यत्रिमूर्तिश्चेदमेवोदाहरन्ति
अणुश्च परमाणुश्च ऊष्माविद्युद्गतिनियमाः
उन्मुक्तं सप्रेम प्रवहन्ति
दीर्घसमायोजोपप्लवाद् ह्रस्वसमायोजने
रिक्तौ चावकाशे च ।
तृषितं बुभुक्षितं शक्तिहीनं शून्यत्वं
समीकुर्वन्ति पूर्णत्वमानयन्ति
मौनं जोषमेते बुद्बुदायन्ते
अन्ये कोलोहला अपि तदेवाधिकृत्य
दुन्दुभिनादैर्दिशां बधिरयन्ति
उत्पादनं चार्जनं च योग्यतानुरूपम्,
वितरणं सम्प्रदानं चापेक्षानुरूपम् ।

## १२१. यदि प्राप्यते हिमशैलपोतः

नौकां निमज्जितवन्तः केचन
उन्मत्तजीवनातलगुहायाम् ।
तीरमेव निमज्जयितुं
प्रारब्धायासाः केचन ।
तत उषाया दिवसायामानि
गोधूलिविततानि
वातवस्त्राणि प्रबलोर्जामयानि !
का सान्त्वना दिग्घीनत्वे ?
समुद्राणां परिच्छायेयमाकाशः
तस्यानन्तपरिच्छायायां निमज्जन्तं मनः
अवगाहनहीनताया जीवने
सर्वा आशा निमज्जयिष्यन्त्वेव ।
स्वप्ना अवकाशसोपानाः
सन्तरन्तु सन्तरन्तु ।
दूरेऽतिदूरे
हिमशैल आगच्छन्नवलोक्यते ।
एतेन प्रवहेण भवितव्यम् ।
नौकासु तीरेषु जलसमाधिं प्राप्तासु
परिणाहहीनसलिले
कश्चिद् बालकः सृष्टेर्बीजः
वटपत्रे स्मेराननः
अङ्गुष्ठं चूषति प्रतीक्षते ।
व्याह्वियताम् ! ऋषिमार्कण्डेय !

## १२२. ईदृगेव निरन्तरम्

कोलाहलस्य निकेते पिपीलिकानामाह्वानात्
अपर्युषितः सङ्कल्पः सोपानारोहणाय प्रक्रमति,
वरटादंशात् पिच्छलगतिभावात्
किञ्चित् पतति
त्रिशङ्कुरिव मध्ये तिष्ठति ।
कल्पनाकरावलम्बनेन स्वप्नाः
तस्य साहाय्यार्थे समासादयन्ति ।
क्षिपति थूत्कारं यथार्थः सम्राड् इव
उच्चैःश्रवसं वाजिनमुद्दिश्य ।
अतृप्तेः शुका रसालशाखायाम्
स्वचञ्चून् घटयन्तो रटन्ति ।
दुर्दिने तृप्तेः पिकाः
पञ्चमस्वरं विस्मृत्य
अन्तर्धानता गताः
कदाचित्पाषाणीव रवन्ति ।
पाटले पाटले सम्मोहनस्य वंशजे
क्षोभाः कण्टकविग्रहाः समुदयन्ति
भ्रमराणां विप्रतिपन्नमार्गित्वम् अवरोद्धुम्
अहर्निशं तारस्वरेण
आलोकेऽन्धकारे वदन्ति
स्वरविश्लिष्टाः प्रतिवदन्ति
ममतायाः प्राङ्गणे पिञ्जरे
ऊहापोहसारिका निर्वासितहृदयस्य
आक्रोशमविकलं साफल्येनानुवदति ।
मस्तिष्के अभिलाषस्य
लुञ्जपुञ्जविकलाङ्गपुरुषार्थचतुष्टयस्य च
रक्तबीजा उपप्लवं सङ्कल्पयन्ति
विप्लवं चायापयन्ति—चापयापयन्ति—
न यवनिका, न पटाक्षेपः,
अद्यत्वे तु
ऊर्मिभङ्ग्यां रथ्यामहिम्नि संसृतिरेषा ।

## १२३. एषा कुशलं पृच्छति शतह्लादा

एषोऽयं तरुणरसालः
मृग्यति वारिदबन्धम्,
मृग्यति सलिलप्रपाञ्च
परिरम्भच्छायाप्रसरे
परिष्वजति च तां स्नेहलशैवलिनीम् ।

दूरादभिनन्दति चोच्चैः
तारस्वर-लुलित-हिमानी ।
अथ किं पृच्छति ज्वाला
शब्दविहीनामभिधानविहीनां पीडाम् ?

एषा शतह्लादा निमिषं निमिषम्
पृच्छति कुशलम्
कुरुते नन्वभिषेकं विमलम्,
परिहसति च चपलम् ।
अरे तृषे ! किं तेऽभिधानम्
किञ्चाऽऽकार-प्रकारौ ?
तुदति च तुदति प्लवति च हृदयं शून्यम् ।

सर्वः सैकतदेशः कोऽयं चैषः ?
शाद्वलमेतत् पुष्पाणां शबलितहासो नीलविलासश्च,
स्मितमस्ति जलागम एष तथा ।
किं तत् किं तत् मृग्यति तरुणरसालः
जलदागमहृदये
कान्तारप्रणतिसमुदये
सरिदाशीर्वचसि
तृषाया निर्वाणम्
व्याकुलचित्तस्य क्षुत्क्षामकण्ठस्य निराकरणम् ?

रससम्भरणप्रणयस्य का व्युत्पत्तिः ?
किं व्याकरणम् ?
न च प्राप्तं सलिलम्
न हि प्राप्ताश्च सुधाकणिकाः ।

गगन-वितत-करुण-प्रतीक्षायां गच्छत्यायुः
सम्प्रति यावन्न च प्राप्तं शिवगरलम् ।

## १२४. अप्रबोधनम्

यात्रिणो ललाटोपरि प्रतिदिनं
तेषां सम्बलभूतसिद्धान्ता अजरामराः
दिशानिर्देशका उत्कीर्णाः समुद्भासन्ते ।
यात्रिणस्तान् सुहृद्वरानभीक्ष्णम्
पठन्ति, तेषां ज्योतिषा
कश्चिद् यथादृष्टि लाभमपि प्राप्नुवन्ति ।
परन्तु खल्वद्भुतास्ते पथिकाः
प्रोज्झितुं तानेव प्रयतन्ते ।
आधरणीं मरकतमणिकुट्टिमे
उषायाः प्राङ्गणे
तेषां सजीवसाधुरत्नानाम्
अपाररक्ताक्रोशः स्फीतः प्रवहन्
तान् पान्थान् प्रबोधयति ।
परन्तु न प्रबुद्ध्यन्ति ते स्वप्नोद्धताः ।
प्रत्युत तानालोकोपाधीन्
प्रमार्ष्टुं प्रयतमानाः
स्वयमेवेतस्ततः विप्रतिपन्नमार्गाः
प्रमृष्टाः सञ्जायन्ते ।

## १२५. लोकेऽलौकिकम्

विमर्शपरिपक्वेन
यवनिकान्तरे
कस्मिंश्चिद्विचारमग्नेन सूत्रधारेण सदृशेन
व्यतीतेन भणितम्—
मञ्चस्थितेनाभिनयकलाविचक्षणेन
वर्तमानेन प्रतिश्रुतम्—
रङ्गभूमौ धीरोदात्तनायकेन
आहार्यादितन्मयेन
भविष्येण प्रतिनिविष्टम्—
नीलकण्ठोष्णीपप्रसाराधस्तात्
क्षमोत्सङ्गे
द्वेऽलौकिके वस्तुनी
साकारस्तु मनुष्यः
निराकारस्तु प्रणयः
तयोर्विद्यमानतायाः
व्याप्ते सुगन्धे
पृथुपुत्री सदा तरुणी नवोढा
न कदाचिदपि प्रणङ्क्ष्यति
ध्रुवसत्तापर्यन्तं खलु सा देवी
लोकोत्तरानन्दभरणी ।

## १२६. दिवङ्गतानि मानोन्मानप्रमाणानि

रक्तवह्नेर्वार्ताहरा: स्फुलिङ्गा:
उद्दामशैवलिनीप्लावनम्
अवगाहनाभिलाषया प्रस्थिता:
अनन्तव्योमवर्त्मना पद्मिनीवल्लभं प्रति,
तारका: पादावनता: विधाय
सप्तवर्णं चापं सन्धाय,
ततस्तत:
कालशतह्लादायां देशशकले
किरणकलिमञ्जीरशब्दे
परिच्छाययूथिकाहीरकहारे
उद्भ्रान्ता: पातालभैरवीरागिनीप्रभाभिसारे
कण्टकानां कुटिलमर्मतुदपरिहासे
मधुरव्यतिरेकि-सुगन्धानां भ्रूकुटिविलासे
उपरता ( मन्ये स्मेरानना वैं )
तरलमिहिकाकनीनिकायाम् ।
उत्साहशैला: सकलज्वालातिपाया: धूमायिता: ।
घटीयन्त्रस्य कल्पा: ब्रह्मवर्षा:
अवधिरूपा: जिह्वा:
ताम्बूल-लालितलोहिता: कषायिता: ।

## १२७. कस्य वीतचिन्तत्वम् ?

शव्दा हि चिन्ता निखिलाक्षराणाम्,
निर्मातुकामा खलु सर्वशव्दाः
वाक्यानि सर्वाणि सभाजयन्ति,
व्यग्रैश्च वाक्यानि सदा विरामैः ॥ १ ॥

कुर्वन्ति वार्तां हि निगूढवन्धाम्,
अर्था भृशं चिन्तितभावभङ्ग्या
सक्रान्तमार्गैः प्रवर्णैर्विरामैः
आलापसक्ता वहुडीयमानाः ॥ २ ॥

अर्थाश्च दत्वा परिधानमालां
दुहन्ति चश्वत् खलु वर्तमानम् ।
हस्तौ प्रसार्याकुलवर्तमानम्
स्पृशेच्च भूतं च भविष्यवृन्तम् ॥ ३ ॥

विहाय चिन्तां च भविष्यमेतत्
भ्रमद्ग्रहे भ्रान्तनभःस्थपिण्डे
आकाशदोले कुरुते च केलिम्
इन्द्रस्य चापैः घनभासनीडे ॥ ४ ॥

# १२८. घासकर्तकी

बव्वूल-कण्टकाः, वंशस्य सान्द्रगुल्माः
नागफणयः, सीहुण्डाः शल्यविद्धाः
तरुणसुवर्णक्षीरिणः, कण्टकिन्यो विषादधूसरिताः,
कां पश्यन्ति, किं परामृशन्ति ?

सीमान्ते ग्रामदेवतायाः स्थाने
कस्याः सीमन्तान्दोलनं धरणीं
तस्या दुहितरं मृत्तिकां गन्धाविले
वाससि वराकीं मलिनतां 'वरं मौन'मुपदिशद्
अभीक्ष्णं प्रणमति ?

कस्याः नेत्रकनीनिका रुदन्ती हसन्ती
किलकिलायन्ती किशलयावयवा
तारस्वरेणार्द्रवात्सल्यमाह्वयन्ती भूलुण्ठिता
क्षुत्क्षामकण्ठा अनन्तानुकम्पामुपहसति
अनन्ताधिपस्य ?

वृश्चिकाः सर्पाः कस्या रक्षाकृते
आलिखवन्ति लक्ष्मणरेखां साम्प्रतम्
जीवितस्य गुप्तचरा इव ?
अन्विष्यन्तः कुशपङ्क्तिमुकुलितध्वान्तम् ।
प्रालेयं, मिहिकास्तुषारपाताः
क्षणार्धेन पलार्धेन
कस्या विग्रहं, 'धू'-'धू'-ज्वालासङ्कुलक्लिन्नोदराग्निम्
तर्षक्षुब्धमुत्साहं, रोमावल्या अशब्दभयानकचीत्कारं,
दैन्यमभिपुष्णन्ति दारुणम् ?

कस्या शून्य उत्सङ्गे
रक्ताम्भोजकिञ्जल्ककाव्यानि
कालिदासस्य भारती, सूर्यालोको, मानसगानं
खेदकलितानि दर्शनानि परिप्रश्नपथप्रयातानि परिदेवन्ति
प्रत्यभिज्ञारश्मी मनोऽपत्यानामवलोकयताम् ।

खल्वेषा ग्रामवास्तव्या सकलदुःखकथां
शकलारम्भां कुर्वन्ती भयमुद्रिताधरा परमार्त्ता
वोहित्थस्य निर्यामकज्येष्ठान् प्रशंसन्ती घासकर्तकी ।
किमुत विजडितव्यवस्था
पङ्गुनर्तकी ।

## १२९. क्षुधिता रुद्राः

'लछमनभय्या डिप्टी' 'शोभूभय्या कलक्टर'
'रज्जूभय्या कप्तान' इत्येतैः शब्दैर्वसर्ति
तुमुलैर्व्यनुनादयन्, दिशो बधिरयन्, कर्णपटहान्
भेदयन् भोजे प्रतिपालीपर्यवसाने
पङ्क्तौ पङ्क्तौ समुत्थितायां स
इतस्ततः उत्प्लवतिस्म सेनापतिभैरव इव ।

तत आबालवृद्धकिशोरवनिता-तरुणं
सर्वं तस्य सैन्यवृन्दं नर्तनस्य कलालाघवं
प्रदर्शयद् उच्छिष्टपूपिकाशष्कुलिसमन्वितान्
सम्पुटान् हर्षोपप्लवे समाहरतिस्म ।

यावद्गोधूलिं निशमपि राशिं राशिम्
उच्छिष्टान्नं सर्वं जीर्णशीर्णेषु खण्डविखण्डितेषु
वस्त्रेषु बद्ध्वा रुद्रज्येष्ठस्य किशोरा-
स्तरुणा, वृद्धाश्च खादन्तिस्म,
अतिरिक्तं गृहं प्रतिनयन्तिस्म
शुभाशंसनाशीः प्रणतिस्वस्तिवाक्कोटिभिः
सभाजयन्तो भोजाधिपतिं
यजमानमाह्लादातिरेकैरभिषिञ्चन्तश्च
सुरसरितीरे श्मशानसकाशं स्वमन्दिरे
वरूथिनीव गच्छन्तिस्म ।
श्मशानस्याधिपतय इमे रुद्रा
अद्यतनाभिधाने सारमेया—भैरववाहना वा
श्वपचाः पराणां शवान् वह्निना दहन्तो
जीवितशवा जठराग्निना दहन्तः प्रलयङ्करस्य
शङ्करस्य शीतभस्मनीव भूतिचर्चिताङ्गं समाजं
बिभ्राणा अलङ्कुर्वन्ति समग्रव्यष्टिसमष्टिपरिणाहान् ।

कदा ? कः ? एतान् 'स्वस्ति' 'स्वधा' 'वषट्'
इति वेदध्वनिं कुर्वाणान् रुद्रान्
अपेक्षानुरूपैर्दैनन्दिनापेक्षावस्तुभिः समर्चिष्यति ?

## १३०. तस्यादृश्यत्वम्

जनद्रोही
जनपीडकः
व्यष्टिसमष्टिहितविघातकः
प्राणिप्रणेता
चराचरस्य वन्धनकर्ता
न जाने कुत्र
अपशव्दगालिभीतभीतो
मुष्टिलगुडप्रहारभयार्तः
कस्यां गुहायाम्
कस्मिन् विवरे कोणे वा
मृषैव जनार्दनो विख्यातः,
अन्धोऽप्यनन्ताक्षो विज्ञातः,
अदृश्यत्वं गतः
निगूढतां प्रयातः ।
'अर्धचन्द्रदानेन निष्काष्यतामयम्
दुष्टो वानर' इति विस्फूर्जथुघोषम्
बिभ्यन्नन्तर्धानत्वेन तिष्ठति ।
मन्ये आह्वानेनालम् ।
मृग्यमाणत्वेनालम् ।

## १३१. सौरभादेशास्ते, शिशुरयं च

बौद्धमन्दिरे भित्त्युत्कीर्णपाटलस्य
सौरभादेशाननुसरन् त्वं
विवेकदामभिः स्वशरीरम्
आत्मानं शृङ्खलाबद्धौ कृतवान् ।
परन्तु मनस्तून्मुक्तविहगः
वियति उत्पतति उत्पतति ।
तत् कियद्वारम् उड्डीयमानं
सतारकं नभः प्रमितवान् ।
तद्धि त्रिविक्रम इव ।
असकृद् बलादानीता शब्दायमाना
आयामहीनता कस्याञ्चित् कलिकायां गोपिता ।
अजेयो दुर्जेयो वा शिशुरयं
न जाने कस्य दुर्ललितं,
( मनोऽपि यस्याभिधानम् ),
यन्त्रपुत्रकं लौहपुरुषमपि सर्वं
पराभवति ।
पुनरपि शिशुरेष तव स्कन्ध आरूढः ।

# १३२. धूमाधारप्रपातः

मध्यप्रदेशे जवलपुरसमीपे नर्मदायां परमभिरामश्चाक्षुषक्रतुरिव अयं हि प्रपातो भाषायां 'धूँआधार' इत्याख्यातः । तस्य सीकराः साक्षात् सङ्गीतझङ्कृतयः । तत्सर्वमित्थं चित्रोपमम्—

राज्ञीव रेवा नवयौवनस्या
शुभ्रं वसाना चलतोयपक्ष्मा ।
कल्लोलिनी श्वेतशिलोच्चयेषु
सञ्चारिणी राजतमन्दिरस्था ॥ १ ॥

प्राप्नोति राशिं शशिकौमुदीनां
पाषाणभूतं गिरिमध्यलग्नम्,
आसारसौधं वितनोति यस्मिन् ।
आधारसंज्ञः खलु धूमपूर्वः ॥ २ ॥

धाराभिरावर्जितनीरगात्री
नर्माणि युङ्क्ते लघुसीकरैर्या ।
तूलानुकारैः रुचिरानुबन्धै-
राभाति सा पेशलगौरवर्णा ॥ ३ ॥

पर्यन्तदेशैरवगुण्ठितास्या
वेलानिलैरूर्मिलमानसा सा ।
न्यस्तस्मिता चिक्कणगण्डपाल्यां
धत्ते पयोबिन्दुकृताभ्रमालाम् ॥ ४ ॥

दीर्घप्रवाहः स हि नर्मदाया
उच्चैर्निनादैर्वलसङ्कुलायाः ।
उद्दामशक्ति वनदेवताया
आविष्करोति प्रपतत्प्रपातः ॥ ५ ॥

आरम्भयायैः किरणैश्च तस्य
मूर्ध्नीव सूर्यस्तिलकं करोति ।
ध्वान्तं गते भास्वरपद्मबन्धौ
सन्ध्या सरागं मृदु चुम्बतीव ॥ ६ ॥

सङ्क्रान्तबिम्बो निशि रश्मियानै-
श्चन्द्रो व्यपक्रामति तस्य कक्षम् ।
फेनस्य कुन्दैर्जलसेकफुल्लैः
सम्पाद्यते तेन विनोदलीला ॥ ७ ॥

उद्गीर्णलेखो नगनिर्झरोऽयं
कान्तारबन्धुस्तरलान्तरात्मा ।
आह्लादवर्षी भुविमुक्तिकेलिः
बध्नाति दृप्तश्छविकृष्टदृष्टिम् ॥ ८ ॥

## १३३. वंशवनम्

शर्करिले पथि न समायातो मधुररसाल:
उटजसमीपे तरुणमधूको
विहसति तिष्ठति च,
एकतालीताले शिंशप एष च गायति
दूरे गुर्जररागेऽष्टपदीम् ।
उपवनमध्ये त्वामलकश्चुम्बति च
मदनसमाकुलपुष्पमसृणशेफालीगात्रं
मधुपूरितमधुरं वक्त्रम्
प्रमदसुरभि दिवसं नक्तम् ।
ग्रामे निम्बो भाषणनिपुणो
निवहति संसद् सत्रम् ।
एतद्वंशप्रतानं
सीमान्ते कुरुते नचिकेतध्यानम्,
शतशतलक्षकलक्षकमधुरामाधव-
मोहनवेण्वभिधानम्
नृत्यति वेल्लति कुरुते ननु च
पुष्पितसर्षपराजिकामानम्,
पश्यतु पश्यतु मदनस्य
वयस्य-वसन्तस्य केतनसंस्थानम् ।
नीलाभपताका शिखरे शिखरे
प्रचरति प्रचरति च ।
आविलमेतत्कमलोपायनं ग्रामसर:
क्षुपचरणे विहरति विहसति च ।
एते सगुणक्षमाप्रणामा:
निभृतनिराकारकृते
उल्वणस्तोत्रपाठरते मार्तण्डकृते
वा हसितवने
मरकतरथिता प्रकटन्ति
सन्ध्यानीडां मुरलीं

द्राक्षाहृदयां प्रातः शहनाईं
खल्वेतानि कानि धमन्ति ।
मन्दसमीरे—
झञ्झापरिरम्भे
मन्दैरुच्चैः ऋक्सामानि पठन्ति ।
दिशि दिशि मुखराणि च
पट्शतशिखराणि च
षड्दर्शनसूत्राणि वदन्ति ।
औचित्यमेव जीवनम्
औचित्यं जीवयतीति सर्वम्
'औचित्यजीवनम्'[1] च गदन्ति ।

---

१. महाकवि-मायाप्रसादत्रिपाठि-विरचितम् "औचित्यजीवनम्"

## १३४. मयूखमुकुरः

औचित्यदेवतायाश्चतुर्षु पाणिषु
एकैकं भास्वान् निर्मलादर्शो विभाति ।
तिस्रः कलयः कुवलयस्य तत्र,
शोभते प्रत्येकं नेत्रमिति शङ्करस्य त्र्यम्बकस्य
सत्यं विकिरति खल्वेकं,
न्यायं बिभर्ति मध्ये ऊर्ध्वस्थम्,
अहिंसां सुधापयोदसंवलितां वर्षति चान्यत् ।
त्विषा सरसि प्रकाशते श्वेतकुशेशयम्,
प्रत्येकदलमेकैकनयनमावहति ।
एतेषु सर्वेषु लोचनेषु
अवश्यायबिन्दवस्तु कनीनिकाः
सूक्ष्मीकृता अरुण इव ।
विश्वस्य जीविताबदाताननमिदं
कालकलारमणीयम् ।
उन्मुक्तकण्ठैरभिधीयते
ह्येष मयूखमुकुरः ।
क्षणस्य कणस्य बिम्बं प्रतिबिम्बञ्च
अस्मिन्नेव सुखस्य शान्तिश्च
परममनोहारि रूपं
कुरुतः प्राणप्रतिष्ठितम् ।
मयूखमुकुरो ह्ययं
व्यष्टेर्निकेतः
समष्टेः प्रकेतः
निखिलसत्तायाः केतनं
परममणिनिर्मितम् ।

## १३५. छिद्यतां समीकरणान्येतानि नूत्नग्रहगणितैरानीतानि

सप्तर्षिभिर्ध्रुवादिभिः समाहूता ब्रह्मवेला =
सागरिका पर्युषिता पिच्छिला पर्यवसिता सन्ध्या
बहुलान्तरिता कान्तारेऽहम्मन्यकुशपङ्क्तिः =
कौमुदीमहोत्सवा रजनीगन्धासुरभिविकासमेखला
आलबाल–लालिता
प्रत्यग्रयौवनस्य मृदङ्गसङ्गीतमुखरता =
पालितचन्द्रमसोऽस्ताचलावलम्बनता
मध्याह्ने शृङ्गाटकप्रतीतिः = दोषाकरी छलना
स्नेहिला स्मेरानना समानता = अवनताननावसादप्लुता विषमता
कौशेयकिशलयकिञ्जल्कसादृश्यम् = नागफणिवैलोम्यम्
अद्भुतैकतानता = सर्वतः सम्प्लुता जनता
विज्ञानपरिधेस्तुलान्यायः = घुणाक्षरन्यायतस्कराणां मलिम्लुचानाम्।
अतोऽतो जीविताकलनम् = मृत्योः सङ्कलनम्
ततश्छिद्यतां समीकरणान्येतानि नूत्नग्रहगणितैरानीतानि।

## १३६. अङ्कनिलये रागवितते

रागवितते स्मेरवृन्ते अर्थदुहिता शिञ्जिनीयम् ।
हासकलिका प्राणदयिता स्वप्नराका गन्धिनीयम् ।
वपति तृप्तिं मुकुलशम्पा सरणिरभिनवकिरणकम्पा ॥ १ ॥
वक्रविधुपरिरम्भयाच्ञा स्पर्शफेनिलगीतचटुला ।
हृदयमौर्वी तर्षवाणा सिन्धुवल्लिर्वीचिविपुला,
रमणसुषिरायोगवंशी जगरवा नीरवविपञ्ची ॥ २ ॥
अमधुमधुकरि ! सहचरी त्वं पुष्पपदवी कण्टकानाम्,
श्वासकविता पेशला खलु वञ्चयित्री वञ्चकानाम्,
अमृतवर्षप्रेरणा खलु उपवनविकचचेतना किल ॥ ३ ॥
रिक्तसम्भृति-वज्रकुसुमे कृत्स्नसंसृतिपूर्णरिक्ते !
आह्वयत्यवधारणा का ? त्वां मसृणनीहारसूक्ते !
अङ्गमदिरे ! प्रकृतिवन्धे ! विकलपुरुषः सर्गसन्धे ! ॥ ४ ॥

## १३७. अत्र

अत्राकाशो वन्दी,
तस्योत्सेधः कारानिगडितः,
तस्य पीनपृथुलवक्षसि वहवः कीलानिक्षिप्ताः ।
पन्थानः सर्वे कुण्डलीमास्थिताः
सर्पा इवात्र ।
यत्रोन्मुक्तश्वासप्रश्वासा अवरोधविधुराः
यत्र दृष्टिस्तु न ज्ञायते कस्मिन् कोणकुहरे
केन वन्धकीकृता ।
अरुणारङ्गमञ्चः सन्ध्याया भूमिका, रागसङ्गीतिः:
शाश्वतं पलायिताः ।
वसुन्धराया दशविधा विकचाः शृङ्गाराः प्रणष्टाः
कोलाहलस्कन्धावारे शान्तिमातृका
मिषतामेव साधूनां कवीनामुपरताः ।
भवनानां सङ्कुले प्रकृताह्लादोऽभवनतामगात् ।
को देशोऽयं ? परिचीयते नगरसम्मर्दो
गर्वोद्धत उच्छ्रायस्कन्धः ।

## १३८. सम्पुटदीपः ( टार्चं इति )

मुहुर्मुहुः स्वसम्पुटदीपमुन्मिष्य
विश्वमूर्तिः किमन्विष्यति—
सत्यं ? न्यायम् ?
आलोककरकन्दलजेभ्योऽपसृतां विलुप्तां
तस्याङ्गुलीयकीकृतामहिंसां
विग्रहीकृतं स्वविग्रहं, तस्य परिच्छायां
जनसङ्कुलत्वे जनानामहमहमिकाप्लावे ।
गगनस्य कादम्बिनीं, भूमेः कादम्बरीम्
संसूचयति संलक्षयति ब्रह्माण्डात्मा—
भविष्येऽसकृद् अनन्तवारं स्वसम्पुटदीपम्
उन्मेषिष्यति ।
दोषाकरोऽपि दोषमिति स्वीकुर्वाण
ओमिति बुद्बुदायते
आत्मपरिसरे ।

## १३९. कुत्र हि खण्डितक्रीडनकम् ?

किञ्जलकितमुदितस्वप्नानाम्
स्मेरं वक्त्रं निद्रामुकुराणाम् ।
कुत्र क्रीडनकं वालक ते
त्वं विलुलित उत्कण्ठातीरे ॥ १ ॥

चञ्चत्प्रमदमधूलानाम्
प्रमदावंशीस्वररन्ध्राणाम्
कुत्र क्रीडनकं वालक ते
त्वं विलुलित उत्कण्ठातीरे ॥ २ ॥

उड्डीनं भावाकुलकल्पं
गुञ्जितमधुगीतमसृणतल्पम्,
कुत्र क्रीडनकं वालक ते
...............तीरे ॥ ३ ॥

गगनपिधानं धरणीमानम्
सप्तानां रङ्गाणामुपधानम्,
कुत्र क्रीडनकं वालक ते
............तीरे ॥ ४ ॥

सुखशवलितशक्रायुधनाम,
वहुसुमावचय-संज्ञाकाम,
कुत्र क्रीडनकं वालक ते
... ........तीरे ॥ ५ ॥

लक्ष्यं यस्य तु सम्वलशाला
यात्रा यस्य तु खेलनमाला,
कुत्र क्रीडनकं वालक ते
............तीरे ॥ ६ ॥

व्यष्टिसमष्टिमहत्त्वाकाङ्क्षा
यस्य तु चत्वरविकसितवाञ्छा,
कुत्र क्रीडनकं वालक ते
............तीरे ॥ ७ ॥

भग्नं क्रीडनकं सञ्जातम्
अद्यावधि ते खल्वज्ञातम्,
निद्राथ विकल्पो वालक ते,
त्वं विलुलित उत्कण्ठातीरे ॥ ८ ॥

## १४०. कन्यके[1] द्वे ? तरुण्यौ ? जीवितम् ? अस्माकम् ?

प्रजापतेः कन्यके द्वे
सञ्जाता वेदमुहूर्ते
प्रथमस्वर्णाभाप्रसरे ।
युवत्यौ तरुण्यौ खलु ते स्याताम्
अधुनायस्कान्तलासरत्विषानुबन्धे ।
'कोटिशः कोटिशो वयम्
एकः स्याम् सकलगुणाभिषावित'
इति रूपसी प्रसूता 'समिति'र्नाम प्रथमा
कृत्स्नजनताप्राणा विड्लालिता ।
द्वितीया सभेत्यभिधानवती
सभेयावयवानवद्या साक्षाल्लक्ष्मीरिव ।

कुतः कस्यां पान्थशालायाम्
सौधे ते द्वे चतुर्मुखस्य भगवतः
परमेष्ठिनः समानीते ।
'निर्वाचनं' 'निर्वाचनम्' इत्याख्ये
मेलापके क्वगते ? विलुप्ते ?
अन्तर्हिते ! अन्तर्हिते !
विशः ! विशः ! विशाम्पते !
मतपत्रहस्ताक्षराणि
'उत्तिष्ठत, जाग्रत,
प्राप्यवरान्निबोधत' ।
लोकतन्त्रं, प्रजायन्त्रं
साम्यमन्त्रः
आह्वयति सरस्वत्युमालक्ष्मीस्वरूपिण्यौ
ते बाले !
'दत्त' 'दयध्वं' 'दम्यत'
इति निनादस्तयोः पुनः प्राणप्रतिष्ठां
विधातु तुः शङ्खं—पाञ्चजन्यं
धरणीमाकाशपातालं समीरयति ?

---

१. वेदानां प्रथमप्रबोधने—उपश्चेतनायां समितिश्च सभा च प्रजापतेर्द्वे दुहितारौ प्रोक्ते ।

## १४१. विमृश ! विकलते !

हिमश्रथ एष नु वैश्वानरहृदये,
उदयति गीतज्योत्स्ना मसि-निचये,
कुसुमाकरपदवी नमति तु कवये,
क्रीडति लुलितकुहूश्चन्द्रकवलये ॥ १ ॥

हस्ताक्षराणि खलु गगनविक्रये
पिकरावा ददति शर्वरीरये,
सम्भ्रमो वोधयति सुखात्मनिलये
मुरलीं कुञ्चिकोन्मीलितप्रणये ॥ २ ॥

एकाकी स्वपिति न क्षुधितो मुकुरः
वद ! मधुराश्लेषाकाङ्क्षाविकिरः
उद्वेलनं वपति याञ्चाविधुरः
शृणु ! शून्यप्रश्नः संज्ञाविपुलः ॥ ३ ॥

नीहारं पीत्वा तृप्तिः परिहसति
देवदारुमारूढं तर्कमुपहसति
पाटलीभ्रान्तिः कण्टकं परिष्वजति
विमृश ! विकलते ! सत्यमनृतमनुवदति ॥४॥

## १४२. सुवर्णक्षीरिणी निर्वृतिर्लम्बना

( 'भणभाण' इति भाषायां प्रख्यातो जीवितस्य प्रतीकम्भूतः )

क्षीरिणी किं वदति पाटलीप्रार्थना
वर्त्मनावन्दिता कण्टकीयाचना
चन्द्रिकार्चिता चन्दनैश्चञ्चिता
शाद्वलैः प्रेङ्खिता छन्दिनीसाधना ॥ १ ॥

मरकतैर्भूषिता मृत्तिकामन्त्रिणी
उपवनैश्चुम्बिता स्पर्शसुखयन्त्रिणी
पत्रिकाकरधृता माधवी कामिनी
प्राङ्गणे कानने कुन्तला यामिनी ॥ २ ॥

चातकोपेक्षिता कोकिलैर्भर्त्सिता
किञ्च जयदेवमधुराक्षरैर्विस्मृता
ग्रामविजने च मे पल्वलीसहचरी
रोधने मार्गणे इङ्गितैः सम्प्लुता ॥ ३ ॥

व्यर्थताकेतना जातवी मानवी
वेदनाहारिणी वेदनाभाविनी
अप्रभंशच्छविर्देवतामनुगवी
तर्कणाशंसिता प्रांशुतानुपदवी ॥ ४ ॥

स्वागता ! स्वागता ! द्वारि च विडम्बना ।
रागिणी दंशिनी निर्वृतिर्लम्बना ॥ ५ ॥

## १४३. बेला वार्ताहरेयम्

मुग्धस्मितानि मुकुलानि मनोहराणि
सन्ध्यासमीरणसमेधितसौरभाणि ।
विम्वाधराविलविलासविकासवेला
प्राणैरवाप्य परितोऽपि परिष्वजन्ति ॥ १ ॥

नीलात्मिकाप्रणवकेतनवन्दनासु
शुक्रोदयस्तु गगने खलु हर्ष एकः ।
अस्मिन् प्रहर्षपरिवेशसुधान्तराले
शुक्रोदया हि वहवो वसुधावतीर्णाः ॥ २ ॥

रूपस्य हे प्रणयमादनपत्रिकासु
चन्द्रस्य गीतवहुलान्यमृतामुखानि ।
वीजान्यतीन्द्रियसुहासभृताक्षराणि !
हे सुन्दरीमसृणमारकटाक्षपाताः ! ॥ ३ ॥

एतानि कानि तु सवीजसमाधितानेे
निर्वीजशान्तकुसुमाकरसारमाने ।
व्रह्मप्रमानुभवसेकसुदीपपङ्क्तौ
शुभ्रंप्रभापुलकदृश्यविकासनानि ॥ ४ ॥

## १४४. हे अतिथिगोत !

( गुर्जररागे एकतालीताले अष्टपदी-ध्रुवपदे )

राका श्यामा वंशी वामा
स्वप्ना: वञ्चित-हृदया: ।
श्वासा गरलं ज्वाला तरलं
तारा: स्खलितसमुदया: ।। १ ।।

ग्रन्थिलपीडा मूर्च्छितमीडा
रचयति कण्टकरथ्याम् ।
स्वागतराग: विषधरनाग:
सुकथां कुरुत अकथ्याम् ।। २ ।।

रुधिरविपञ्ची स्फुरणामञ्ची
छिन्नस्वनितविधाना ।
विग्रहवेला मुण्डितहेला
भ्रान्ता प्राणोन्माना ।। ३ ।।

कथमथ चन्द्र: इत्थमतन्द्र:
ध्वान्तकषायितवेश: ।
वितनोति विभां कवितादिसुधाम्
आरोहरसोन्मेष: ।। ४ ।।

## १४५. स्तोकमेव पन्थानमतिक्रम्य

आलोकस्य विपुलप्रस्तरेषु
निभृतेः निष्पिष्टरसः
प्रसरति, श्यायति
ह्यः सन्धौ
कोलाहलस्य रक्त-सदृशः ।
शून्यतायाः स्फटिकसोपानेषु
पवनस्य वटवृक्षाः
मिषतामेव शीर्षकाणाम्
गगनं निगलन्ति ।
तस्य गन्धवाहस्य झिरझिरायमानाः
वटरुहा जटाः
प्रघणेषु, छदिराभोगेषु गोपुरेषु तथा
उटजानां मस्तकेषु
पर्णशालानां वक्षःसु
श्वासानां नूतनानि
अनुबन्धपत्राणि
विविधरङ्गमयीभाषासु लिखन्ति ।
रक्ताक्तनेत्राः परिच्छायाः
निमीलितपक्ष्माणः स्वप्नाः
मधुगन्धानां चषकैः चषकैः
सम्पीतिं भजन्ति ।
उड्डीनतायाः सङ्कुलेषु
उत्कण्ठायाः प्रहरिणः
आत्मनिलयस्य द्वारे
संवेदनायाश्छागानां बलिं सम्पादयन्ति ।
गीतानि अगीतानि
अवश्यायं लिहन्ति,
अवसादा नरीनृत्यन्तः
नयनद्वयेन विरहिताय सकलहरितसन्दर्भाय
जाने कियन्ति प्राभृतानि
वण्टयन्ति !

## १४६. समवेतत्वं चतुर्दिक्

(१)

चतुरङ्गः—
शतरञ्जः............
तरवः............
वल्लर्यः............
नदी............
सन्ध्या............

(२)

सुमनांसि—
गन्धः............
रूपम्............
रसः............
स्पर्शः............
मन्त्रः............
यन्त्रम्............
सम्मोहनम्............

(३)

चित्रम्—
मसिः............
शीर्षकम्............
रङ्गः............
रेखाः............
सम्भृतिः............
रिक्तिः............
हृदयम्............
मस्तिष्कम्............
वयम्............

(४)

जीवन्ताः—
पक्षिणः............
मानुषाः............
पशवः............

झिल्ली............

ज्योतिरिङ्गण:............

तथा............

तथा............

( ५ )

समीरण:—

श्वसनम्............

धावनम्............

गोपनम्............

मार्गणम्............

अवस्कन्द:............

खेल:............

कन्दुक:... ......

पारदर्शिता............

मर्मरता............

कविता............

( ६ )

कोलाहल:—

कूपा:............

खातानि............

सरांसि... ......

तरङ्गा............

अवरोध:............

सङ्घट्ट:............

विराम:............

धुक्पुक्............

मूर्च्छा............

प्रश्वास:............

( ७ )

आरम्भ:—

वंशी............

सप्ततार:............

गिटार:............

वीणा ............
ऊर्ध्वम् ............
अधस्तात् ............
पुपिका ............
पुष्पिका ............
आकाशः ............

(८)

पुलकोद्गमः—
आलोडनम् ............
सीमान्ताः ............
निद्रा ............
स्वप्नाः ............
निकेतः ............
बहिः ............
समवेतत्वम् ............
समवायः ............

**चतुर्दिक**

## १४७. वह्नौ न हि दाहः प्रत्युत विकचोत्साहः

मध्याह्लोऽयमनुवदति, सुतरामविकलम्
सरितायाः खलु सैकतस्य व्यालोडितहृदयम् ।
आतपवातः पृच्छति वह्नेर्ज्वालामालाकुलप्रश्नम् ।
पद्धतिरेषा नयति च उत्कण्ठागीतं, रश्मिविनीतं
ननु पदचापम्, न जाने कतमे मधुरे
दग्धे शाखाचङ्क्रमणे दिग्विभागे ।
तिमिरं गन्तव्यफुपफुसान्निष्कापितं
कोकिलवपुर्धरं रौति च शाखायां फलितरसाले ।
अग्नौ ज्वालायां जीवति स्मेरा पुनरपि मरकतसाक्षर-
रसनाभा ।
गते ! चेष्टे ! अनिमेषलोचने ! एषा सर्वा स्पन्दनस्य
नाडीपरमोल्लासस्य शाश्वत परिभाषा ।
सार्वभौम सार्वकालिक पुष्पितफलिताशा ।
निदाघोऽट्टहसति, तस्य कोणे कोणे
घर्मायामास्फालित-मनोऽभिलाषा ।
दिक्साम्मुख्ये दिक्साम्मुख्ये
प्रत्येका छाया-अप्सराः-अप्सरापाशा ।
प्रह्लादशिरीषकलिपदवी पर्जन्योच्छ्वासा ।

## १४८. नूतनः परात्परः

द्रष्टः ! तरुरिह ह्रस्वो विपुलः
मूकः क्षीणो वाग्मी पृथुलः
दर्पितमुखरः शान्तश्चटुलः
संज्ञाशून्यः संज्ञामुकुलः ॥ १ ॥

मधुरसपत्रो विषधरकूलः
शाखाहर्षो व्यापन्मूलः
काशदुकूलस्तमसश्चूलः
किशलयग्रावा पुष्पसतूलः ॥ २ ॥

उदरे लौहः पृष्ठे काँचः
हस्ते स्फटिकः, पादे कालः
मस्ते विद्युत्, वज्रो हृदये
स्कन्धे प्रातः, सन्धिः प्रचये ॥ ३ ॥

यत्र च तत्र सदा खलु परितः
जडता—विभुता नृत्यत्यभितः
शतशो रागं गायति रात्रौ
दिनमणिपङ्जरूपभसम्प्राप्तौ ॥ ४ ॥

तरुरेष कथं च किमभिधानम्
काभिज्ञा खलु किञ्च प्रमाणम्
किं स्वस्थः, किं रुग्ण;
कथमथ रिक्तः किञ्च निधानम् ॥ ५ ॥

अर्हति चोद्भिद् ह्येषसपर्याम्,
चाटुधूपनैवेद्यसमर्थाम्,
विधित्रिविक्रमशङ्कररूपः
भूमौ तनुते सुरवनचर्चाम् ॥ ६ ॥

रटति च दिशति च कोणे कोणे
विश्वे परमाणौ विज्ञानी
'पूजयतु नूतनं परात्परम्
नितरां महाप्रभुप्रणिधानी' ॥ ७ ॥

## १४९. आलोडनं समीहते

( देशाङ्करागे एकतालीताले अष्टपदी—ध्रुवपदे )

ज्योत्स्ना-स्मित ! मा वर्ष प्रणयम्
भव निशि निमिषार्धं त्वं सदयम् ।
आलपति निःस्वनता प्रश्नविरावे पुष्पितमुग्धा ॥ १ ॥

हृदये हृद्युच्छ्वाससरितवंशी
प्रणदति प्राणोद्वेलनशंसी ।
आलपति निःस्वनता············पुष्पितमुग्धा ॥ २ ॥

किं परिरम्भवर्तनीमुखरः
पवनः पृच्छत्याशाविकिरः ?
आलपति·········पुष्पितमुग्धा ॥ ३ ॥

स्पर्शनिमीलितनेत्राः शब्दाः
अधरारोपितनिगडितलुब्धाः ।
आलपति ·········पुष्पितमुग्धा ॥ ४ ॥

हर्षति पुलके रजनी-वेला,
सीदति श्रान्तकल्पना खेला ।
आलपति······ ···पुष्पितमुग्धा ॥ ५ ॥

नहि विहसति द्वारे शेफाली
आम्रविचुम्बितपल्लवपाली ।
आलपति··· ··· ···पुष्पितमुग्धा ॥ ६ ॥

दूरे वहिर्गतं सामीप्यम्,
बन्धके रक्षितं सालोक्यम् ।
आलपति··· ··· ···पुष्पितमुग्धा ॥ ७ ॥

स्मारं स्मारं प्रथयति कवितां
हर्षस्य विषादः प्लवमथिताम् ।
आलपति·········पुष्पितमुग्धा ॥ ८ ॥

धैर्यं गायति 'याच्ञामोघा' ।
रिक्तिः मिथ्या कण्टकशोधा ।
आलपति······ ···पुष्पितमुग्धा ॥ ९ ॥

पयसामाप्लावे तिमिरविषम्
पदे पदे मधूकमधुरमिषम् ।
आलपति·········पुष्पितमुग्धा ॥ १० ॥

## १५०. नावतिष्ठते पृच्छा

( रागगौरी )

उपदिशति कथं कण्टकवारः ?
पार्श्वे क्षुब्धः कलिपरिवारः ?
वक्तुं तस्यास्यविवृतिसारः
असमर्थः सर्वव्यापारः ॥ १ ॥

दृष्ट्वा तैक्ष्ण्यं सुमसंसारः
म्लायति नित्यं श्रीसम्भारः
मूकसमीरणकलगलहारः
शोके खिन्नो दलविस्तारः ॥ २ ॥

किं धावति गन्धप्रत्याशा
भयविदलितपरिमलभाषा ?
झञ्झाहस्ते कुन्तकवृन्दं
तुदति च मधुदानपरं भृङ्गम् ॥ ३ ॥

अनुभवशबला पुष्पपतङ्गाः
भाषन्ते सत्पथानुषङ्गाः
उपदेशानां परमः सारः
श्रेष्ठः खलु स्यादात्मसुधारः ॥ ४ ॥

# १५१. त्वं परिणाहसुवापः

( रामकलिरागे रूपकताले अष्टपदी—ध्रुवपदे )

मानव ! मा भव ! पावनधरणितले नियतेरभिशापः
सुमकुल-स्रग्धर ! सौरभर्चचित ! त्वं परिणाहसुवापः ।
सविता सप्तकमधुनिकरे किरति प्रणोदनं स्वस्तिभरे ॥ १ ॥

सृष्टिमुकुट ! विभुताप्रतिनिधिरवनीगगनं त्वं रक्ष ।
जीवितसङ्गरविलुलित ! संसृतियुद्धपथे मा गच्छ !
सविता ··· ··· ·· ··· ··· ··· ··· स्वस्तिभरे ॥ २ ॥

यच्छ च कुसुमितपरमसमन्वयऊर्मिविलोडित-जलधिम्
सङ्घसुतारकयाननिमज्जनमञ्जुलसन्तरणविधिम् ।
सविता ··· ··· ··· ··· ··· ··· ··· स्वस्तिभरे ॥ ३ ॥

शतपथसङ्कुलबहुनियमाकुलदोलितसत्यविताने
ईश्वरलव ! प्रतिभारव ! विरचय श्रमयज्ञं संज्ञाने ।
सविता ··· ··· ··· ··· ··· ··· ··· स्वस्तिभरे ॥ ४ ॥

मानवतोपचये खलु दानवतापचये यतनीयम् ।
वास्तवपरहितसाधनसुमनसि सकलजनैः तरणीयम् ।
सविता ··· ··· ··· ··· ··· ··· ··· स्वस्तिभरे ॥ ५ ॥

शिखरसमाकुलविषमभयाकुलविगता शासनसरणिः
वीचिविकलतिमिरनिवहरासपथे त्वं भासिततरणिः ।
सविता ··· ··· ··· ··· ··· ··· ··· स्वस्तिभरे ॥ ६ ॥

उल्वणबलविपुलकरपृथुलपदमादननवविज्ञानं
जनयति मानसदुःखविधां कुरु नवसर्जनसन्धानम् ।
सविता ··· ··· ··· ··· ··· ··· स्वस्तिभरे ॥ ७ ॥

विधुभवनागतमानुष एष स्मरति वसुधाया उदयम् ।
बह्वनुवारविमर्शन इह रचय च सम्प्रति सुखनिलयम् ।
सविता ··· ··· ··· ··· ··· ··· ··· स्वस्तिभरे ॥ ८ ॥

## १५२. कोकिल ! 'कुहू' त्वं न कुरु

( रागभैरवी—झपतालताले )

कोकिल ! 'कुहू' त्वं न कुरु मधौ विपिने ।
अधुना किंशुकहृदि प्रणयोविलुलितः
अरुणा पीडा व्यथयति, स भृशं निभृतः,
परिहासपरः पवनो नृत्यति मुदितः ॥ १ ॥

आम्रो ह्ययं चित्रयति प्रियां प्रथमे
सरिताया क्षुब्धाम्भसि रागव्यथितः ।
शाल्मलिः सुमस्तवको आशामथितः
अनुराधां परिरभते निशि जागरितः ॥ २ ॥

पाटलसुरभिरद्य वंशिकां स्वप्ने
मृग्यति घने केलिकौतुके प्रघणे ।
मृगभ्रम उडी सम्पिवति मधुरप्लवने
ज्योत्स्नाया अधरसुधां ज्योतिर्धमने ॥ ३ ॥

शेफालिके ! एहि वाहने मदने
छायानीते, शशधर आलोडितः
इच्छति दूरे गन्तुं, दयितारहितः,
वितथामन्त्रणलेखः किशलयलिखितः ॥ ४ ॥

कोकिल ! 'कुहू' त्वं न कुरु मधौ विपिने ।

## १५३. रविशशिशकले मृदु हसति ऋतम्

विद्युच्चुम्बकविकिरणरागे गायति विश्वे गणितम् ।
काशवत्सरे नीहाराणां ताराभ्रमरीरणितम् ।
मस्ते वलसंहत्यूर्जादीनां ब्रह्माण्डक्वणितम् ।
कोणे कोणे कलतनुकोशे शृणु ! सूत्राणां भणितम् ।
नभस्तरङ्गे 'सोऽहं'–विवृतम् ।
निस्सीमयशसि खलु लसति ऋतम् ।। १ ।।

अक्षे कक्षायां सुरतरुणाः परिरक्षणसिद्धान्ताः
गतिलयमुखराः शब्दविहीनाः श्रुतिसङ्गीतप्रान्ताः
जागरवेशा गभस्तिगौरा वृन्ते पुष्पितध्वान्ताः
स्वस्तिकवरणे हृदिनिर्व्याजाः विपुलव्याजभ्रान्ताः
कणमुकुले क्षणसलिले प्रसृतं
रभसं मन्दं वा सरति ऋतम् ।। २ ।।

कामनियतिधर्मार्थविवक्षा ज्यौतिषमोक्षस्कन्धम् ।
आशारहितं खण्डं पूर्णम् आशानागविबन्धम् ।
जलहीनं ननु वेलासहितं पयसां मर्यादासन्धम् ।
आकुलशान्तिः जडता जवता ग्रावणि शम्पास्पन्दम् ।
भुवि सत्यशिवं दिविमञ्जुभृतम्
दृष्टादृष्टं वै सुवति ऋतम् ।
रविशशिशकले मृदु हसति ऋतम् ।। ३ ।।

## १५४. संवेदनशैली

अणोरुच्चारणे सङ्गीतपीयूषमधुरानुस्वारे
अनन्तवाक्यार्थसमीहितं ब्रह्माण्डं समाहितम् ।
संवेदनलवस्य मानवस्य लघुता खलु लवसंवेदनम् ।
सान्तरसंज्ञबिन्दौ निरन्तरं निस्सीमक्षितिजचैतन्यमाराधिनम् ॥१॥

दुःखानि चावसादाश्च पक्ष्मलयन्ति केवलं प्रथिमानम्,
इतस्ततः वर्णे वर्णे पत्रे पत्रे
किरणैः किरणैः ध्वान्तविकिरणैः ग्रथ्यमानम् ।
उच्छ्वसिता आह्लादास्तु धमन्ति हृदयं यद् नक्षत्रद्यावापृथ्वीपारे
नैकस्मिन् कलकलनिनादिन्याः युगपद् देशस्य कालस्य सरितायास्तारे ॥२॥

परिभो तथा स्वयम्भो कवे मनीषिन्
कृत्स्नं परिष्वजतु रुदितं हसितम्
श्लक्ष्णनघर्षणशैलोत्पत्यकाधित्यकावसुधाकोलाहलबन्धे
निःस्वनस्वनितं कलितम् ।
सहितस्य दर्पण आह्लयति बिम्बं च प्रतिबिम्बं च
विगतं वर्तमानं दूरे व्यालम्बितम् ।
अक्षरातिगशब्दानां संहारे मुकुलितविकसित उपचारे
प्रश्नोत्तरे दृढमाकम्पितम् ॥ ३ ॥

युगे युगे महत्त्वाकाङ्क्षा मधुरजिजीविषा संन्यस्तमुमुक्षा
सर्वेषां चक्राणां क्रियाकलापपाराणां
बहुविधव्याहरणानां विन्यस्तविवक्षा ।
यत्र तत्र सर्वत्र सदा प्रचरति, विकसति संवेदनातितिक्षा ।
अनुवदति संवदति रणति पथि सलिले
वेलायां च लेखन्याः वाचः उद्दामदिदृक्षा ॥ ४ ॥

अहर्निशमाराधयति मानवतां या एकलसङ्कुलसरणिः
भूयादेवमेव खलु भ्रमेऽपि प्रमायामपि युगचतुष्टयस्य तरणिः ॥ ५ ॥

## समीक्षाओं के उद्धरण

अपने संस्कृत काव्यसंग्रह 'सिन्दूररागविकिरणम्' तथा 'क्वणति किञ्जल्कः ध्वनति वज्रः' के माध्यम से प्रतिभाशाली महाकवि आचार्य मायाप्रसाद त्रिपाठी ने संस्कृत-कविता को बिलकुल नई दिशा एवं नये आयाम प्रदान किये हैं।

त्रिपाठी जी की इन कविताओं की शालीनता, सौन्दर्य, गरिमा, आधुनिक भावबोध, अद्भुत उद्भावनाएँ, निस्सीम क्षितिज़, व्यापकता, प्राणवत्ता तथा वास्तु-विधान अनुपम ही नहीं अमर भी हैं।

**करुणापति त्रिपाठी**

अध्यक्ष : उत्तरप्रदेश संस्कृत अकादमी, लखनऊ

भूतपूर्व कुलपति : सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

बहुमुखी प्रतिभासम्पन्न महाकवि मायाप्रसाद त्रिपाठी के संस्कृत काव्य-संग्रह 'सिन्दूररागविकिरणम्' तथा 'क्वणति किञ्जल्कः ध्वनति वज्रः' सर्वथा अभिनवशिल्पोत्कीर्ण हैं। ये कवि की उन्नायक स्वोपज्ञता, अद्भुत उद्भावना-शक्ति से ओत-प्रोत हैं।

आधुनिक भावभूमि पर व्यष्टि-समष्टि समस्त मानवता के जीवन के पक्षों को उजागर करने में— गहनतम आधुनिक विषयों—आयामों के सन्निवेश में त्रिपाठी जी ने कमाल किया है।

ये कविताएँ मर्मस्पर्शिता, उदात्तता एवं प्रभविष्णुता के दृष्टिकोण से सचमुच अप्रतिम और अमर हैं।

त्रिपाठी जी ने इन कविताओं के माध्यम से संस्कृत भाषा को नई भंगिमाएँ—टटके तेंवर प्रदान किये हैं।

**बदरीनाथ शुक्ल**

कुलपति । सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

भूतपूर्व अध्यक्ष : उ० प्र० संस्कृत अकादमी, लखनऊ

महाकविश्रीमायाप्रसादत्रिपाठिनमहं परिचिनोमि। अयं कविताकलायामपि परिनिष्ठितो विद्वानिति प्रमाणयन् अस्य सर्वविधं श्रेयोऽभिलषामि।

**पी० एन० पट्टाभिराम शास्त्री**
शास्त्ररत्नाकर, विद्यावाचस्पति, विद्यासागर
सम्मानित अध्यापक, स० सं० विश्वविद्यालय
निदेशक : वेदमीमांसानुसन्धान केन्द्र

मुझे विश्व के अन्य सुधी-समीक्षकों की इस बात की पुनरावृत्ति करने में तनिक भी हिचकिचाहट नहीं है कि महाकवि आचार्य मायाप्रसाद त्रिपाठी के अद्भुत और अनुपम संस्कृत काव्यग्रन्थ केवल भारतवर्ष में ही नहीं, समस्त विश्व में सदा मूर्धन्य रहेंगे।

त्रिपाठी जी कवि-सम्मेलनों में एवं रेडियो-टेलीविजन पर अपनी संस्कृत-हिन्दी-कविताएँ अति मधुर स्वर में सुना कर श्रोताओं को मंत्रमुग्ध कर देते हैं। इन्होंने विश्व-संस्कृत-सम्मेलन ( वाराणसी १९८१ ) के विशाल संस्कृत-कवि-सम्मेलन में अपनी 'चल मुदा समं, चल सदा समम्' नामक शीर्षक परम ओजस्वी संस्कृत कविता को सस्वर सुना कर वहाँ एकत्र समस्त विश्व के श्रोताओं को एकदम भावविभोर कर दिया।

**भागीरथप्रसाद त्रिपाठी**
निदेशक : अनुसंधानसंस्थान,
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

महाकवि आचार्य मायाप्रसाद त्रिपाठी की संस्कृत कविताएँ हृदय तथा मस्तिष्क को अद्भुत ढंग से आह्लादित तथा आप्यायित करती हैं। वे समग्र मानव-सत्ता को एकदम आलोड़ित-विलोडित कर देती हैं। उनका रणन, उनका माधुर्य, उनका वज्रघोष, उनकी गरिमा, सारवत्ता, प्रत्यग्रता सार्वभौम एवं सार्वकालिक हैं—बेजोड़ हैं।

चाहे रेडियो पर हो, चाहे टेलीविजन पर हो, चाहे कवि सम्मेलन में हो, त्रिपाठी जी अपनी कविताएँ सुनाते भी सस्वर बड़े मनोहर ढंग से हैं।

**जयदेव सिंह**
भूतपूर्व संगीत निदेशक,
सूचना एवं प्रसारण मंत्रालय, भारत सरकार,
अध्यक्ष : संगीत नाटक अकादमी

Mahakavi Acharya Pandit Maya Prasad Tripathi has made unique contributions to Sanskrit poetry in his anthologies entitled 'Sindooraragavikiranam' and 'Kvanati Kinjalkah, Dhvanati Vajrah'. The compositions of Mahakavi M. P. Tripathi are strikingly original and embrace various aspects of thought in the universe, world peace and unity of Mankind.

He has given new directions and dimensions to Sanskrit poetry that would place him among the leading Poets in contemporary Europe. I wish him more and more success in his endeavours.

**N. S. S. Raman**
Professor & Head,
Department of Philosophy,
Banaras Hindu University, Varanasi.

बहुमुखी प्रतिभा के धनी महाकवि आचार्य मायाप्रसाद त्रिपाठी के अभिनव शिल्पोत्कीर्ण संस्कृत काव्य-संग्रह 'सिन्दूररागविकिरणम्' तथा 'क्वणति किञ्जलक: ध्वनति व्रज्र.' आदि स्पष्ट परिलक्षित करते हैं कि इनकी काव्य-प्रतिभा तथा कारयित्री पुरोगामिता अनुपम हैं।

इनका शब्द-चयन, प्रगीतात्मकता, शिञ्जनशील रागलय युक्त अच्छन्दस्त्व, भाषा के अनुकरण से परे मनोहारिणी एवं प्रत्यग्र भंगिमाएँ, ब्रह्माण्डाश्लेषी बिम्बविधान, सर्वाङ्गीण काव्य-परिनिष्ठा, 'शणवल' आदि कोमल वर्णोत्पन्न माधुर्य के साथ-साथ वज्रघोष, अद्भुत मौलिकता, विश्व-समस्याओं के प्रति छटपटाहट और उनके सुलझाव के सुझाव इंगित आदि विशेषताओं ने संस्कृत काव्य को आज पुन: बिलकुल शिखरासीन कर दिया है। इन्होंने आधुनिक संस्कृत-कविता के क्षेत्र में केवल उन्नायक का ही काम नहीं किया है, प्रत्युत उसे नये अमर आयाम और नई दिशा देने में भी अभूतपूर्व सफलता प्राप्त की है।

त्रिपाठी जी की संस्कृत-कविताएँ विश्व की अंग्रेजी, फ्रेंच, जर्मन, रूसी आदि सर्वाधिक विकसित भाषाओं के काव्य से बड़ी सरलता से सफल टक्कर लेती हैं।

रेडियो या टेलीविजन पर अथवा कवि-सम्मेलनों आदि में जब ये अपनी हिन्दी या संस्कृत कविता सुनाते हैं तो श्रोता एकदम मुग्ध हो जाते हैं।

**कैलाशपति त्रिपाठी**
अध्यक्ष : संस्कृत साहित्य-विभाग
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

'सिन्दूररागविकिरणम्' 'क्वणति किञ्जल्क: ध्वनति वज्र:' आदि रचनाओं में श्रीमायाप्रसाद त्रिपाठी ने जिस सांकेतिकता को अपने कविकर्म में बहुत दूर तक निभाया है, उसमें अर्थपक्ष भावपक्ष से प्रबल है। संगीतपक्ष भी भावपक्ष के ही समान प्रबल है। ...सामाजिक चेतना भी आपकी रचनाओं में निहित और मुखर है। मुझे प्रसन्नता है कि संस्कृत को इस प्रकार की बहुमुखी प्रतिभा उपलब्ध है। विश्वास है कि श्रीमायाप्रसाद त्रिपाठी से संस्कृत-वाङ्मय के काव्यपक्ष का उपकार होगा।

**डॉ० रेवाप्रसाद द्विवेदी**
आचार्य तथा अध्यक्ष : साहित्य-विभाग
काशी हिन्दू विश्वविद्यालय, वाराणसी

**Sanskrit Poet Honoured**

Mahakavi Acharya Maya Prasad Tripathi has been awarded Emeritus Fellowship in this year by the Government. Through his immortal Sanskrit poetry Mahakavi Tripathi has established Sanskrit poetry on the international stage. Foreign and Indian experts both have said that his ultramodern Sanskrit poetry, mostly lyrics, easily competes with the modern poetry in English, Greek, German and Russian languages of the world. For being the greatest Sanskrit poet of India in 1981-82 he won President's award of Honour for Sanskrit.

**Northern India Patrika**
( Varanasi and Lucknow )
26-6-87

## आचार्य मायाप्रसाद त्रिपाठी को विशिष्ट सम्मान

आचार्य मायाप्रसाद त्रिपाठी को इस वर्ष भारत सरकार द्वारा इमेरिटस फेलोशिप ( दो सहस्र रुपये प्रतिमास ) प्रदान किया गया है ।

संस्कृत-कविता के क्षेत्र में अपने अनुपम और अमर अवदान द्वारा त्रिपाठी जी ने आधुनिक संस्कृत-कविता को अन्तर्राष्ट्रीय मंच पर स्थापित कर गौरवान्वित किया है ।

१९८१-८२ में उनकी अप्रतिम संस्कृत काव्योपलब्धि के लिए आचार्य त्रिपाठी को राष्ट्रपति सम्मान भी प्राप्त हो चुका है । त्रिपाठी जी की संस्कृत कविताएँ दूरदर्शन एवं आकाशवाणी के विविध केन्द्रों से प्रसारित होती रहती हैं ।

त्रिपाठी जी अनेक ग्रंथों के रचयिता भी बतलाये जाते हैं ।

—दैनिक जागरण
( दि० २८-६-१९८७ )

## मायाप्रसाद त्रिपाठी को इमेरिटस फेलोशिप

रायगढ़ शासकीय कला एवं वाणिज्य महाविद्यालय, खरसिया के प्राचार्य श्री एस. पी. त्रिपाठी के अग्रज अन्तर्राष्ट्रीय ख्याति-प्राप्त आचार्य मायाप्रसाद त्रिपाठी को इस वर्ष भारत सरकार द्वारा इमेरिटस फेलोशिप ( दो सहस्र रुपये प्रतिमाह ) प्रदान किया गया है ।

संस्कृत-कविता के क्षेत्र में अपने विशिष्ट अवदान द्वारा महाकवि त्रिपाठी ने आधुनिक संस्कृत-कविता को अन्तर्राष्ट्रीय मंच पर स्थापित कर दिया है। देश-विदेश के सभी विशेषज्ञों की दृष्टि में श्रीत्रिपाठी के संस्कृत काव्य आधुनिक अंग्रेजी, फ्रेंच, जर्मन, रूसी, ग्रीक, इटेलियन भाषा की सर्वोत्कृष्ट कविताओं के समक़क्ष है ।

१९८१-८२ में उनकी अप्रतिम संस्कृत काव्योपलब्धि के लिए कवि श्रीत्रिपाठी को राष्ट्रपति सम्मान पुरस्कार प्राप्त हो चुका है ।

श्रीत्रिपाठी की संस्कृत कविताएँ, दूरदर्शन एवं आकाशवाणी के विविध केन्द्रों से प्रसारित होती रहती हैं, जिसमें दिल्ली एवं लखनऊ के दूरदर्शन एवं आकाशवाणी केन्द्र भी सम्मिलित हैं ।

नवभारत, मध्यप्रदेश
( दि० ११-८-१९८७

## पं० श्रीमायाप्रसादत्रिपाठि-महाभागस्य सद्यो विशिष्ट-सम्मानम्

अन्तर्राष्ट्रियख्यातिप्राप्ताय कविमायाप्रसादत्रिपाठिमहाभागाय ऐपमः 'इमेरिट्स फेलोशिप'-( द्विवर्षपर्यन्तं द्विसहस्ररूप्यकाणि प्रतिमासम् ) इत्याख्या विशिष्टसम्मानवृत्तिः भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयस्य संस्कृतिविभागेन प्रदत्ता ।

संस्कृतकविताक्षेत्रे स्वीयेनानुपमामरावदानेन अनेन महाकविना आधुनिक-संस्कृतकविताम् अन्तर्राष्ट्रियमञ्चे संस्थाप्य संवर्द्धय च तस्यै विशेषगौरव-मदायि । देशविदेशानां सर्वैः विशेषज्ञैर्भणितं त्रिपाठिमहाभागस्य संस्कृतकाव्यम् आङ्ग्ल-फ्रेञ्च-जर्मन-रूसी-ग्रीकेटलियनप्रभृतिभाषाणां सर्वोत्कृष्टकविताभिः समं सुतरां सफलरूपेण स्पर्द्धते इति ।

१९८१-८२तमे खीष्टाब्दे कविरस्य अप्रतिमकाव्योपलब्धिं संलक्ष्य अयं हि सुधीपरिनिष्ठितकवि राष्ट्रपतिसम्मान-पुरस्कारमपि लब्धवान् । त्रिपाठिमहा-भागस्य संस्कृतकविताः दिल्ली-लखनऊ-भोपाल-प्रभृतिभिः दूरदर्शनाकाशवाणी-केन्द्रैरपि प्रसार्यन्ते । अस्य महाकवेः सस्वरं मधुरं कवितापाठः श्रोतॄन् मन्त्र-मुग्धान् करोति । अयं हि महाकविः शेमूषीमद्वरिष्ठैः विदद्भिः 'भारतस्य विभूतिः' 'राष्ट्रस्य गौरवम्' इत्यपि समाख्यातः ।

त्रिपाठिमहाभागेन प्रायेण द्विशतग्रन्थाः विरचिताः, तेषु दशकाव्यग्रन्थाः प्रमुखतया प्रसिद्धिकोटिमायाताः । कवितायाः ग्रन्थाः पुरस्कृता अपि सन्ति । एते गाण्डीवं संस्कृतसाहित्यपत्रे प्रायः लिखन्ति । गाण्डीवं परिवारः एतेन प्रसन्नतामनुभवति ।

( साप्ताहिक गाण्डीवम् दि० १५-२१ जून, १९८७ )
वाराणसेय सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,

# शुद्धिपत्रम्

| पृष्ठाङ्कः | पङ्क्तिः | अशुद्धः | शुद्धः |
|---|---|---|---|
| ७ | १६ | आशते | आशास्ते |
| १० | २७ | कोलहल: | कोलाहला: |
| २६ | १६ | तं | तम् |
| २६ | २८ | पुभावे | पुम्भावे |
| ३५ | २७ | कुहिमे | कुट्टिमे |
| ४३ | १६ | मत्स | मत्स्य |
| ४६ | १० | वावहूका: | वावदूका: |
| ५१ | ९ | कुहिमे | कुट्टिमे |
| ५६ | ७ | वज | व्रज |
| ६२ | २५ | स्रव | स्रथ |
| ७० | २० | चाक्षुण | चाक्षुष |
| ७७ | २३ | निर्वचिते | निर्वाचिते |
| ८६ | २० | अवतिष्ठन्ति | अवतिष्ठन्ते |
| २६ | २३ | सांयान्त्रिका: | सांयात्रिका: |
| ८९ | १८ | संयात | संयान |
| ९५ | २५ | उदडयथा: | उड्डयथा: |
| ९५ | २९ | भाषमानानि | भाषामानानि |
| ९६ | ८ | विविरणां | विवराणां |
| १०१ | १८ | ह्लदस्थ | हृदयस्थ |
| ११० | ८ | अन्विपति | अन्विष्यति |
| ११३ | २१ | पारदर्शिनी | पारदर्शिनि |
| ११६ | १६ | महाधिष्णतु | महाधिष्ठातु |
| १२३ | २० | सङ्कुलेन | सङ्कुलेन |
| १२६ | ८ | सर्वदश | सर्वादर्श |
| १२६ | १५ | तवागमनार्थम् | तदवगमनार्थम् |
| १४३ | २६ | सौभाग्यप्रतिवन्धा | सौभाग्यप्रतिवन्धा: |
| १४५ | २७ | लक्ष्मी | लक्ष्मी: |
| १४६ | ८ | भावो | भावं |
| १४८ | २३ | योजोपप्लवाद् | योजनोपप्लवाद् |
| १५० | १९ | पत्र | पन्न |
| १५७ | २६ | भस्मनीव | भस्मानीव |
| १६० | ३३ | उद्गीर्ष | उद्गीर्ण |
| १६४ | १० | स्नेहिला | स्नेहला |



महाकवि[illegible] [illegible]त्रिपाठी १९८२ खीष्टा[illegible] [illegible]स्य सर्वश्रेष्ठकवि-रिति राष्ट्रपति[illegible] ( महामहोपाध्यायः )। [illegible]राज्यस्य पञ्चादश-भाषाणां कविषु [illegible] इति कृत्वा भारतसर्वका[illegible] [illegible]मेरिटस फेलोशिप-संमानेन समाजित[illegible], कविः, कथाकारः, बहुमु[illegible]ाहित्यकारः, लेखकः, विश्वबन्धुत्वस्य [illegible]शान्तेश्चानन्योपासकः। कार्यसरणेरारम्भे विभागाध्यक्षः, प्राध्यापकश्च उदयप्रतापमहाविद्यालये, काशीहिन्दूविश्वविद्यालये वाराणस्याम्। तत्पश्चात् पी० सी० एस० इति पदं परित्यज्य बहुवर्षाणि यावत् ग्रन्थ-लेखने सम्पादने च निरतः। वर्षत्रयपर्यन्तं प्रयागविश्वविद्यालये, वाराणसेय संस्कृत-विश्व-विद्यालये, अन्यविश्वविद्यालयेषु, हस्तलिखित-सरस्वतीभाण्डागारेषु च प्रत्न-भारतीं, वाङ्मयं, ज्ञानविज्ञानं च समाश्रित्य अनुसन्धानम्। सम्प्रति स्वतन्त्ररूपेण संस्कृतकाव्यसर्जनायां दिशान्वेषणे चाकण्ठं निमग्नः। इतः पूर्वं—प्रायेण द्वादश-वर्षावधिप्राग् यावत् स्वजन्मजातवैयक्तिकाभिरुचिमनुसृत्य यथावसरं वैज्ञानिक-गवेषणमपि। वाराणस्यां सारनाथसमीपे 'सोनहुला' इत्यभिधे ग्रामे जन्म ( खीष्टाब्दे १९२७ )। पितृनाम—पं० राजारामतिवारी; मातृनाम—श्रीमती मल्लिकादेवी। आङ्ग्लहिन्दीभाषयोः पञ्चाशद् ग्रन्थाः। प्रत्नभारतीयेतिहासस्य मौलिकदर्शनस्य च बहवो ग्रन्थाः। विदेशेष्वपि बह्व्यः रचनाः प्रकाशिताः, बहु-प्रशंसिताः। द्वादशाधिकाः संस्कृतकाव्यग्रन्थाः। संस्कृतशेमुषीमद्वरिष्ठैः विशेषज्ञैः 'संस्कृतकाव्यक्षेत्रे महाकवेरस्य अवदानम् अनुपमम्, अमरम्' इति नितरां श्लाघितम्। कवित्रिपाठिना स्वदेवभाषाकविताग्रन्थैः संस्कृतकाव्यं बहुमान-पुरस्सरम् अन्तर्राष्ट्रियमञ्चे प्रतिष्ठापितम्।

जौहरी 'प्रिन्टर्स', वाराणसी